# व्यावहारिकं संस्कृतम्

द्वितीयम् पुस्तकम्



स्वाद्ध्यायशाला

# व्यावहारिकं संस्कृतम्

## द्वितीयम् पुस्तकम्





पथिकृत्

शिवराज आचार्यः कौण्डिन्न्यायनः

आचार्यः, एम्. ए., विद्यावारिधिः (पि-एच्. डि.), वाचस्पतिः (डि.लिट्.)

रचयिता

प्रमोदवर्धनः कौण्डिन्न्यायनः मीमांसाचार्यः



स्वाद्ध्यायशाला

२०५३

प्रकाशकम्-
स्वाद्ध्यायशालाकुटुम्बम्

प्रथमं संस्करणम् - २२०० पुस्तकानि
२०५३

मूल्यम्- ३०।- (त्रिंशद् रूप्यकाणि)

पुस्तकप्राप्तिस्थानम्-
स्वाद्ध्यायशाला
च. २/४१९, सरस्वतीमार्गः,
लाजिम्पाट् , काष्ठमण्डपनगरम्-२,
नेपालदेशः ।
दूरस्वनः ४१०३२७

मुद्रकः – नेपाल-प्रिण्टिङ्ग-सपोर्ट-मुद्रणालयः, रामशाहपथः, दूरस्वनसङ्ख्या ४२०४७४

# विषयानुक्रमणिका

# भूमिका•

## १. संस्कृत-वाङ्मयस्य महत्त्वम्

भूमण्डलस्य यस्मिन्कस्मिन्नपि भागे निवसतां सर्वेषां मानवानां कृते संस्कृतवाङ्मयस्य प्रभूतं महत्त्वमस्तीति सुविदितमेव ।

संस्कृते विद्यानां विविधा विधाः प्राप्यन्ते । वार्तया विद्यायाः कृषिशास्त्रम् , पशुशास्त्रम् , वाणिज्यशास्त्रम् , स्थापत्यशास्त्रम् , आयुर्वेदशास्त्रम् इत्यादीनि अनेकानि शास्त्राणि, त्रय्या विद्यया वेदवेदाङ्गस्मृतिपुराणेतिहासादीनि धर्ममीमांसा-ब्रह्ममीमांसादीनि च शास्त्राणि, दण्डनीत्या विद्यया नीतिशास्त्रम् , प्रशासनशास्त्रम् , धनुर्वेदशास्त्रम् (आयुधशास्त्रम् , युद्धशास्त्रम्) इत्यादीनि शास्त्राणि, आन्वीक्षिक्या विद्यायास् तर्कशास्त्रम् , पदार्थशास्त्रम् , साङ्ख्य-शास्त्रम् , योगशास्त्रमित्यादीनि शास्त्राणि च संस्कृतवाङ्मये सन्ति । महाकविभासकालिदासादिप्रणीताः काव्य-नाट्य-कथा-ऽऽख्यायिकादिरूपा ललितकलाप्रधाना नानाविद्यासिद्धान्तगर्भा अनेके ग्रन्थाश्च संस्कृत-वाङ्मये सन्ति ।

एवं मानवानां कृते सार्वजनिकनिधिरूपेण स्थितं संस्कृतवाङ्मयमेतस्मिन् कोलाहलपूर्णे आधुनिके मानव-समाजे नैतिकताया मानवताया विश्वबन्धुतायाश्च प्रसारे महत्त्वपूर्णं भवितुं शक्नोतीति संस्कृतवाङ्मयस्योपनिषद्-गीतादिग्रन्थानां स्वल्पमपि परिचयं प्राप्तवतां जनानामतिरोहितम् । मानवजीवनरहस्यान्वेषणे संस्कृतवाङ्मयस्य सर्वोपकारकत्वमपि सुविदितमेव । वैदिक-सनातन-वर्णाश्रमधर्मानुयायिनां कृते तु वेदवेदाङ्गादि-संस्कृतवाङ्मयस्य महत्त्वं वर्णनातीतं वर्तते । हिन्दुभिः सह वर्तमानस्य वेदवेदाङ्गादि-संस्कृत-वाङ्मयसम्बन्धस्य सर्वथा विच्छेदः क्रियते तर्हि हिन्दूनां हिन्दुत्वमेवाऽपगच्छति । हिन्दूनां जन्मनः प्रभृति मरणं यावत् सर्वे धार्मिक-क्रियाकलापा वेदवेदाङ्गादि-संस्कृतवाङ्मयस्य एव आधारे संस्कृतभाषाया एव प्रयोगेण चैव क्रियन्ते ।

भारतवर्षनिवासिनां वैदिकजनानामार्याणां राष्ट्रियतायाः स्रोतो वेदादेव प्रवहति । तेषां नैतिकता संस्कृत-वाङ्मयेनैव प्रकाशिता भवति । तेषां मूलजीवनपद्धतिर् वेदैर्वेदाङ्गैश्चैव निर्दिष्टाऽस्ति । तेषामनादिकालात् प्रभृति प्रचलन्त्या विशिष्टायाः शिक्षापद्धतेः परम्परां स्थिरां कृत्वा तेषां राष्ट्रियतां बलीयसीं कर्तुं तेषां गौरवं वर्धयितुं च संस्कृतविद्यापरम्पराया विशिष्टा भूमिका भवति । तस्मात् तेषां कृते संस्कृतवाङ्मयस्य विशिष्टं महत्त्वमप्यस्ति ।

नेपालदेशनिवासिनां कृतेऽपि संस्कृतस्य महत्त्वं प्रभूतमस्ति । नेपालदेशस्य राष्ट्रभाषा संस्कृतमूलाऽस्ति । तस्याः समृद्धये संस्कृतस्याऽऽवश्यकता विद्यते । नेपालस्य धर्मसंस्कृति-प्रशासन-कलाकौशलादिसम्बद्धस्य इतिहासस्य महत्त्वपूर्णोऽंशः संस्कृतभाषायामेव सुरक्षितो वर्तते । नेपालवासिषु मध्ये प्रभूततरेषु मनुष्येषु धर्मभावनायाः सांस्कृतिकभावनायाः नैतिकतायाः कलात्मकानुभूतेश्च सम्पादने चरित्रबलस्य अभिवर्धने च संस्कृतवाङ्मयस्य नितान्तमावश्यकता वर्तते । दैनन्दिनजीवनयात्रायाः कृतेऽपि बहुसङ्ख्यका नैपाला जना संस्कृतवाङ्मयज्ञानम् अपेक्षन्ते । तद् यथा, नैपाला जनाः

१) दैनन्दिनव्यवहारनीतेर् ज्ञानं कर्तुं हितोपदेश-पञ्चतन्त्र-चाणक्यनीतिदर्पणादीन् ग्रन्थानपेक्षन्ते ।

२) स्वधर्म-दर्शनज्ञानाय वेद-वेदाङ्ग-स्मृति-पुराण-रामायण-महाभारत-गीतादिग्रन्थानपेक्षन्ते ।

३) आयुर्वेद-ज्योतिषादिप्राच्यविज्ञानाध्ययने संस्कृतभाषायां लिखितानां ग्रन्थानामुपयोगं कुर्वते ।

४) संस्कृतपदपदार्थज्ञानेन नैपालीयभाषायाः प्रयोगे नैपुण्यं प्राप्नुवन्ति ।

५) नित्यनैमित्तिकादिकर्मसु आवश्यकानां वैदिकानां पौराणानां वा मन्त्राणां शुद्धरूपेणोच्चारणं शिक्षितुं संस्कृतपठनस्योपयोगं कुर्वते ।

संस्कृतवाङ्मयस्यविद्यानां परम्परायाः संरक्षणे समर्थानां विशिष्टानां शिक्षकाणाम् , साधारणशिक्षां प्राप्तवतां जनानं कर्तुं शक्यानि समाजसेवाया राष्ट्रसेवायाश्च विविधानि कार्याणि कर्तुं समर्थानां स्वीय-धर्मसंस्कृतिपरम्परा-ऽऽचारविचारादरवतां संस्कृतवाङ्मय-परिचययुतानां संस्कृतमूलक-साधारणशिक्षां प्राप्तवतां समाजसेवकानां राष्ट्र-सेवकानां राष्ट्रनीतिसम्बद्धकार्य-कर्तॄणां राष्ट्रनेतॄणां च नेपालदेशे परमावश्यकता वर्तते । एतस्मात् कारणात् नेपालवासिनां कृते संस्कृतवाङ्मयस्याऽतीव महत्त्वं वर्तत इति स्पष्टं भवति ।

• एषा भूमिका शिक्षकाणाम् , अभिभावकानाम् , शिक्षाविदाञ्च कृते वर्तते, न तु विद्यार्थिनाम् । विशेषतस्तु एषा भूमिका शिक्षकाणां कृते वर्तते । तस्माद् शिक्षकैः पूर्वमेतां भूमिकां पठित्वा संस्कृतभाषोच्चारणरीतिं पठनपाठनप्रक्रियां च बुद्ध्वा सामान्यतया एतदनुसारमेव शिक्षणं कर्तव्यम् ।

अतः स्वम् आदर्शम्, धर्मम्, दर्शनम्, संस्कारम्, आचारम्, विचारम्, व्यवहारम्, वेषम्, स्वां भाषाम्, भूषाम्, नीतिम्, संस्कृतिम्, स्वराष्ट्रम्, स्वगौरवम्, स्वाभिमानञ्च रक्षितुमिच्छद्भिस् तेषु विषयेषु रममाणैश्च सर्वैर् भारतवर्षीयैरार्यैर् जनैः, विशेषतो नैपालैर् जनैः संस्कृतशिक्षाया विकासाय विस्ताराय सुदृढीकरणाय च यतितव्यम् । तादृशैर् जनैस् सह सामञ्जस्यपूर्णां स्वीयां जीवनयात्रां सञ्चालयितुमिच्छुकैरन्यैश्च जनैस् तत्र साहाय्यं कार्यम् ।

## २. अस्याः व्यावहारिक-संस्कृत-पाठ्यपुस्तकमालायाः प्रकाशने उद्देश्यम्

एषा व्यावहारिक-संस्कृत-पाठ्यपुस्तक-माला मुख्यतया संस्कृतभाषायाः शिक्षणायैव निर्मिता वर्तते । एतस्याः पठनेन नैपालीयाद्याधुनिक-भारतवर्षीय-भाषाणां परिष्कृते प्रयोगेऽपि क्षमता वर्धते । एषा व्यावहारिकसंस्कृत-पाठ्यपुस्तकमाला प्रथमादिदशमान्तानां कक्षाणां कृते लिख्यते । एतस्याः सम्पूर्णाया मालाया अध्ययने कृते जनाः शास्त्रीयं व्यावहारिकं च संस्कृतं बोद्धुं व्याहर्तुं लेखितुं च समर्था भवन्ति । पञ्चमकक्षापर्यन्तमेतस्याः संस्कृत-पाठ्यपुस्तकमालायाः पठनेन षष्ठकक्षायां संस्कृत-माध्यमिक-विद्यालये प्रवेशो सुकरता च भवति ।

अस्माकं मते संस्कृतशिक्षायाः (१) धर्मदर्शनशिक्षा- (२) वेदवेदाङ्गस्मृतिपुराणादिशास्त्रशिक्षा- (३) ज्योतिषाऽऽयुर्वेदादि-प्राच्यविज्ञानप्रविधिशिक्षा- (४) संस्कृतग्रन्थमूलकसर्वजनोपयोगि-साधारणशिक्षारूपाश् चत्वारः पक्षाः सन्ति । तेषां सर्वेषां पक्षाणामनुकूलतया प्रमुखतया साधारणशिक्षाङ्गरूपा एषा माला प्रकाश्यमाना वर्तते । एवञ्च संस्कृतभाषायाः प्रचारणम्, स्वधर्मसंस्कृतिज्ञानविज्ञानकलासाहित्यसंरक्षणम्, संस्कृतशिक्षाविकासविस्तारसुदृढीकरणञ् चैवास्याः पुस्तकमालायाः प्रकाशने उद्देश्यम् ।

## ३. व्यावहारिकसंस्कृतपाठ्यपुस्तकमालाप्रकाशनकोषव्यवस्था

एतस्याः पुस्तकमालायाः प्रकाशनाय प्रारम्भे संस्कृतशिक्षाप्रेमिणां दानेनैव कोषव्यवस्था क्रियते । अनन्तरं पुस्तकानां विक्रयेण प्राप्तस्य द्रव्यस्यार्धांशस्य च कोषे समावेशः करिष्यते । प्रतिपुस्तकं पुस्तकमूल्यस्य चतुर्थोऽशः पाठ्यपुस्तकस्य रचयित्रे परिव्ययत्वेन दास्यते । पुस्तकमूल्यस्य अन्यश् चतुर्थोऽशश्च पाठ्यपुस्तकप्रचारार्थं विनियोक्ष्यते । एवं क्रमेण प्रथमकक्षाप्रभृति दशमकक्षापर्यन्तं पञ्चमकक्षापर्यन्तमेव वा दश पञ्च वा पाठ्यपुस्तकानि प्रकाशयिष्यन्ते । एतदर्थम् अवरतो द्वे लक्षे (२,००,०००।-) रूप्यकाणाम् आवश्यके । तत्र एतस्य कोषस्य व्यवस्थां कर्तुं प्रथमपुस्तकप्रकाशनावसरे दत्ताद् दानादतिरिक्तं द्वितीयपुस्तकप्रकाशनावसरेऽधोनिर्दिष्टं दानं दत्तवद्भ्यो महानुभावेभ्यः स्वाध्यायशालाकुटुम्बेन धन्यवादा उपह्रियन्ते ।

| | | |
|---|---|---|
| १. | श्रीयुता प्रभालक्ष्मी राणा महोदया काष्ठमण्डप-लालदर्बारनिवासिनी | ११११०१।- |
| २. | श्रीयुतः अर्जुनबहादुरसिंहमहोदयः काष्ठमण्डप-बालुआटारनिवासी | २५०५।- |
| ३. | श्रीयुता खिलरत्नेश्वरी थापा महोदया काष्ठमण्डप-गैरिधारा-जोरपिपलनिवासिनी | २५००।- |
| ४. | श्रीयुता हरिमायादेवी पौड्यालयमहोदया तनहुँ-मैबलनिवासिनी | २०००।- |
| ५. | श्रीयुतः उपेन्द्रप्रसादभट्टराइमहोदयः काष्ठमण्डप-बालुआटारनिवासी | २०००।- |
| ६. | श्रीयुतः मोहनप्रसादबाँसकोटामहोदयः काष्ठमण्डप-कमलपोखरिनिवासी | २०००।- |
| ७. | श्रीयुतः जगदीशशमशेरराणामहोदयः काष्ठमण्डप-बत्तिसपुतलिनिवासी | २०००।- |
| ८. | श्रीयुतः प्रीतिनाथप्याकुर्‍यालमहोदयः काष्ठमण्डप-ठमेलनिवासी | १००१।- |
| ९. | श्रीयुतः हेमराजज्ञवाली महोदयः काष्ठमण्डप-महाङ्कालबौद्धनिवासी | १०००।- |
| १०. | श्रीयुतः कृष्णराजः अर्यालः महोदयः काष्ठमण्डप-गैरिधारानिवासी | १०००।- |
| ११. | श्रीयुतः तुलसीप्रसादभट्टराइमहोदयः ओखलढुङ्गा-सेर्नानिवासी | १०००।- |
| १२. | श्रीयुतः केसरिराजपाण्डेमहोदयः काष्ठमण्डप-ढोकाटोलनिवासी | १०००।- |
| १३. | श्रीयुतः रवीन्द्रराजपाण्डेमहोदयः ललितपुर-सानेपानिवासी | १०००।- |
| १४. | श्रीयुतः पाइलट-कर्नेल-मदनबहादुर के.सी. महोदयः ललितपुर-लगनखेलनिवासी | १०००।- |
| १५. | श्रीयुतः इ. रामबहादुर के.सी. महोदयः काष्ठमण्डप-लाजिम्पाटनिवासी | १०००।- |
| १६. | श्रीयुता अङ्गूरबाबा जोशी महोदया काष्ठमण्डप-बागबजारनिवासिनी | १०००।- |
| १७. | श्रीयुता टीकामञ्जरी प्याकुर्‍यालमहोदया काष्ठमण्डप-मण्डिखाटारनिवासिनी | ७५०।- |
| १८. | श्रीयुतः शैलेन्द्रकुमारगौतममहोदयः काष्ठमण्डप-लाजिम्पाटनिवासी | ६००।- |
| १९. | श्रीयुतः डा. गोविन्दटण्डनमहोदयः काष्ठमण्डप-बत्तिसपुतलिनिवासी | ५११।- |
| २०. | श्रीयुतः दामोदरकोइरालामहोदयः ललितपुर-जाउलाखेलनिवासी | ५०५।- |

२१. श्रीयुता इन्दिरा मल्लमहोदया काष्ठमण्डप-लाजिम्पाटनिवासिनी ५०५।-
२२. श्रीयुतः कुलशेखरशर्मा महोदयः काष्ठमण्डप-बानेश्वरनिवासी ५०२।-
२३. श्रीयुतः रामबाबुपन्तमहोदयः काष्ठमण्डप-ज्ञानेश्वरनिवासी ५०१।-
२४. श्रीयुतः निरोधराजपाण्डेमहोदयः काष्ठमण्डप-ज्ञानेश्वरनिवासी ५०१।-
२५. श्रीयुता मीना सिग्देलमहोदया काष्ठमण्डप-चाबहिलनिवासिनी ५०१।-
२६. श्रीयुता सुगीयादेवी रौनियारमहोदया सप्तरी-कञ्चनपुरनिवासिनी ५०१।-
२७. श्रीयुतः डा. दण्डपाणिपौडेलमहोदयः तनहुँ-मैबल-बारिफाँटनिवासी ५०१।-
२८. श्रीयुतः मुकुन्दशरण उपाध्यायः महोदयः पोखरानिवासी ५०१।-
२९. श्रीयुतः शिवगोपालरिसालमहोदयः ललितपुर-जाउलाखेलनिवासी ५०१।-
३०. श्रीयुतः श्रीकण्ठशर्मा पोखरेलः महोदयः ललितपुर-लगनखेलनिवासी ५०१।-
३१. श्रीयुतः केदारप्रसादशर्मा महोदयः काष्ठमण्डप-मण्डिखाटारनिवासी ५०१।-
३२. श्रीयुतः विदुरविक्रमसिंहः अधिकारी महोदयः काष्ठमण्डप-सिफलनिवासी ५०१।-
३३. श्रीयुतः मेजर-कृष्णबहादुरखड्कामहोदयः काष्ठमण्डप-मालिगाउँनिवासी ५०१।-
३४. श्रीयुतः अच्युतरमणः अधिकारी महोदयः काष्ठमण्डप-घट्टेकुलोनिवासी ५०१।-
३५. श्रीयुतः केदारकुमारराजभण्डारी महोदयः काष्ठमण्डप-कमलपोखरिनिवासी ५०१।-
३६. श्रीयुतः भुवनदेवपन्तमहोदयः काष्ठमण्डप-पुतलिसडकनिवासी ५००।-
३७. श्रीयुतः मधुसूदनढकालमहोदयः काष्ठमण्डप-चण्डोलनिवासी ५००।-
३८. श्रीयुता गुणराज-“रामदास”-पत्नी काष्ठमण्डप-त्रिपुरेश्वरनिवासिनी ५००।-
३९. श्रीयुतः रमेशखकुरेलमहोदयः काष्ठमण्डप-कमलपोखरिनिवासी ५००।-
४०. श्रीयुतः हरिप्रसादपौडेलमहोदयः ललितपुर-इमाडोलनिवासी ५००।-
४१. श्रीयुतः सुन्दरप्रसादशाहमहोदयः काष्ठमण्डप-ज्ञानेश्वरनिवासी ५००।-
४२. श्रीयुतः सोमनाथोपाध्यायघिमिरेव्यासमहोदयः काष्ठमण्डप-टङ्गालनिवासी ५००।-
४३. श्रीयुतः हरिप्रसादपौड्यालयमहोदयः काष्ठमण्डप-चण्डोलनिवासी ५००।-
४४. श्रीयुतः राधारमण उपाध्याय आचार्यः महोदयः काष्ठमण्डप-बानेश्वरनिवासी ५००।-
४५. श्रीयुतः कमलमणिदीक्षितमहोदयः ललितपुर-पाटननिवासी ५००।-
४६. श्रीयुतः सुरेन्द्रसिंहखत्री महोदयः काष्ठमण्डप-डिल्लिबजारनिवासी ५००।-
४७. श्रीयुतः डा.कमलप्रकाशमल्लमहोदयः काष्ठमण्डप-मैतिदेवीनिवासी ५००।-
४८. श्रीयुतः द्वारिकाश्रेष्ठमहोदयः काष्ठमण्डप-पानिपोखरिनिवासी ५००।-
४९. श्रीयुता कुमारी सत्या लिम्बुतुम्बाहाङ्गफेमहोदया धरान-भोटेपुलनिवासिनी ५००।-
५०. श्रीयुता विमला लोहनी महोदया काष्ठमण्डप-भाटभटिनिनिवासिनी ५००।-
५१. श्रीयुतः पीताम्बर आचार्यः महोदयः काष्ठमण्डप-फर्पिङ्गनिवासी ५००।-
५२. श्रीयुतः योगनाथपौडेलमहोदयः काष्ठमण्डप-बालुआटारनिवासी ५००।-
५३. श्रीयुतः मधुसूदनज्ञवाली महोदयः काष्ठमण्डप-ज्ञानेश्वरनिवासी ५००।-
५४. श्रीयुतः गोपालप्रसादघिमिरेमहोदयः काष्ठमण्डप-टङ्गालगैरिधारानिवासी ५००।-
५५. श्रीयुतः मोहनप्रसादघिमिरेमहोदयः काष्ठमण्डप-घुम्बाराहि-चाबहिलनिवासी ५००।-
५६. अन्ये उदारा महानुभावाः ६६१।-

## ४. संस्कृतस्य शुद्धम् उच्चारणम् , संस्कृतभाषा च

इदानीं संस्कृतज्ञनिकाये आ, ई, ऊ, ऋ, ॠ, ऌ, ॡ, ए, ओ इत्येतेषां स्वरवर्णानाम् , अं, अः इत्येतयो-रयोगवाहवर्णयोः, ब, व, श, ष इत्येतेषां योगवाहव्यञ्जनवर्णानाम् उच्चारणे श्रुतौ च अबोधो भ्रमश्च व्यापको वर्तते। पण्डिता अपि प्रायेण उक्तानां वर्णानां शुद्धम् उच्चारणं न जानन्ति। अत उपर्युक्तानां वर्णानाम् उच्चारणे अशुद्धिं कुर्वाणाः संस्कृतपाठकाः सर्वत्र दृश्यन्ते, तथैव च य इत्यस्य ज्य इति क्ष इत्यस्य छ्य इति ज्ञ इत्यस्य ग्यँ द्न न्य इत्यादिकम् अशुद्धम् उच्चारणं च प्रचलितं दृश्यते। एतादृशमुच्चारणं शास्त्रसम्मतं नाऽस्ति। अत एतेषां शुद्धं शास्त्रसम्मतमुच्चारणं कर्तुं प्रयत्नः कर्तव्यः। लकार ऋकारयोगजाक्षरलिपेः लृ इत्यतः

स्वतन्त्रस्वररूपस्य लृकारस्य लिपेर् भेदस्याऽप्रसिद्धत्वात् च स्वररूपऋकारस्वरूपविषये अपि पण्डिता: प्रायेण भ्रान्ता: प्राप्यन्ते। संस्कृतस्य शिक्षकाणां कृते उच्चारण-विषयेऽपि प्रशिक्षणव्यवस्था कर्तव्या। आकाशवाणी-द्वाराऽपि शुद्धमुच्चारणं प्रचारणीयम्। एतस्मिन् विषये संस्कृतशिक्षाप्रेमिभिरवधानन् देयम्।

संस्कृतभाषाया सन्धि: स्वाभाविकरूपेणाऽऽगच्छति। सन्धिं (सन्धिजविकारं वा) त्यक्त्वा पृथक्पृथक् पदानि सह रक्षित्वा वाक्यं निर्माय क्रियमाणं शिक्षणं संस्कृतभाषाया जीवत: प्रवाहस्य प्रतिकूलं वर्तते। तथापि सरलीकरणं व्यपदिश्य इदानीन्तन-संस्कृत-पाठ्यपुस्तक-लेखनादौ तेनैव प्रकारेण वाक्यप्रदर्शनस्य परिपाटी स्वीकृता दृश्यते। एतस्य प्रचलनस्य निरुत्साहनम् उचितं वर्तते। तथापि व्यवहारे सहसा परिवर्तनं कर्तुमशक्यं विलोक्य अस्माभिरपि एतस्मिन् द्वितीये पुस्तकेऽपि तस्या: परिपाट्या: किञ्चिदनुसरणं कृतमस्ति। भाषाया: सरलीकरणं खलु प्रसिद्धतराणां पदानां चयनेन जटिलानां वाक्यरचनानां यथासम्भवं परिहारेण च कार्यम्, न तु जीवतो भाषाप्रवाहस्य प्रतिकूलतया अस्वाभाविक्या भाषाया: प्रयोगेणेति पण्डितैर् विवेक्तव्यम्। एतस्मिन् विषये संस्कृतभाषावित्सु, संस्कृतशिक्षाप्रेमिषु, शिक्षावित्सु, शिक्षकेषु, विद्यार्थिषु चोचितायां चेतनायां जागरितायां पूर्णतया स्वाभाविकस्यैव संस्कृतस्य एतादृशे पाठ्यपुस्तके प्रयोगोऽस्माभि: कर्तुमिष्यते।

"कार्यङ् कुरुते, पत्रम् पठति" इत्यादिषु पदान्तस्थपञ्चमवर्णस्य स्थाने अनुस्वारस्यैव लेखनम् , उच्चारणे तु सर्वत्रैव मकारस्यैवोच्चारणम् इदानीन्तनै: प्राय: सर्वैरपि संस्कृतपाठकै: क्रियते। इयं रीति: संस्कृतभाषाया: उच्चारणगतशुद्धेर् दृष्ट्या आपत्तिजनिका वर्तते। व्यञ्जने परे सति पदान्तमकारस्य अनुस्वारीभवनं यद्यपि पाणिनीयव्याकरणसम्मतम् , तथापि अनुस्वारस्य उच्चारणे प्राय: अशुद्धे: क्रियमाणत्वात् र-श-ष-स-ह-वर्णातिरिक्तेषु सर्वेष्वपि व्यञ्जनवर्णेषु परेषु अनुस्वारस्य परसवर्णीभावस्य मूलाया वैदिकसंस्कृतभाषाया अनुकूलतरत्वात् परसवर्णीभावपक्षस्यावलम्बनम् उचितम् आवश्यकं च वर्तते। कार्यङ् कुरुते, गान् ताडयति, पत्रम् पठति, विद्यालययँ याति, लगुडलँ लाति, एडकौश् चारयति इत्येतादृशेन रूपेण प्रयोगं कृत्वा लेखने उच्चारणे च साम्ये स्थापिते भाषाया लिखित: प्रयोग: सरलश्च भवति। उच्चारणप्रतिकूलस्य लेखनस्य शिक्षणे महत् काठिन्यं भवतीति सर्वै: शिक्षकैरनुभूतमेवाऽस्ति। तस्माद् वयम् एतस्य पक्षस्य प्रचाराय प्रयतमाना: स्म:। तथापि प्रचलनस्य प्राचुर्याद् इदानीं सर्वेषु व्यञ्जनेषु परेषु पदान्तमकारस्य अनुस्वारीकरणपक्ष एव लेखेऽङ्गीकृत:। तथापि परसवर्णपक्षस्य परिचयाय कतिपयेषु वाक्येषु परसवर्णोदाहरणानि प्रयुक्तानि सन्ति। शिक्षकैरेतां वस्तुस्थितिं बुद्ध्वा अनुस्वारस्य परसवर्णानां च उच्चारणगते भेदे विद्यार्थिनां ध्यानाकर्षणं कर्तव्यम्।

विसर्गस्योच्चारणेऽपि अशुद्धिकरणं व्यापकरूपेण प्राप्यते। विसर्गस्योच्चारणगतस्वरूपमपि बहुभिरज्ञातमेवाऽस्तीति ज्ञायते। विसर्गस्य खलु कखयो: परयोर् जिह्वामूलीयरूपेण, पफयो: परयोरुपध्मानीयरूपेण, शषसेषु परेषु परसवर्णरूपेणोच्चारणं स्वाभाविकतरं भवति। तस्मात् स्वाभाविक्यां व्यावहारिक्यां संस्कृतभाषायाम् एतस्यैव पक्षस्य अवलम्बनं समुचितं दृश्यते। तथाप्येतस्मिन् पक्षे उचितायाश्चेतनाया जागरणं यावन् न भवति तावत् प्रचलिता पद्धतिरेवाऽस्याम् पुस्तकमालायामप्यङ्गीक्रियते। एतद्विषयेऽपि उक्तं स्वाभाविकं पक्षमेव प्रचलने आनेतुं यथावसरं प्रयास: करिष्यते।

संस्कृतभाषायां व्यञ्जने परे सति स्वरात् परं व्यञ्जनं द्विरुच्यते। एतादृशं व्यञ्जनद्वित्वं स्वाभाविकं वर्तते। द्विर्भूतयोर् व्यञ्जनयोर् मध्ये प्रथमं व्यञ्जनं प्रायेण पूर्वस्याक्षरस्याऽङ्गं भवति द्वितीयञ्च परस्याक्षरस्याऽङ्गं भवति। यथा "वाक्क्यम्" इत्यत्र "वाक्-क्यम्" इति द्वे अक्षरे, "पट्ठ्यते" इत्यत्र "पट्-ठ्य-ते" इति त्रीण्यक्षराणि। यद्यपि "अनचि च (८।४।४७)" इति सूत्रेणाऽप्यन्वाख्यातो व्यञ्जनद्वित्वस्याऽयं पक्ष: प्राय आधुनिके लेखेऽनुसृतो न दृश्यते, तथापि वेदेषु प्राचीनेषु केषु चन शिलाभिलेखेषु च लेखनेऽप्ययं पक्षोऽवलम्बितो दृश्यते, उच्चारणे तु प्रायो निरपवादतयाऽधुनाऽप्युपलभ्यते। तस्मादुच्चारणानुसारमेव लेखनं शिक्षार्थिनां बालकानां कृते सरलं भवतीति व्यञ्जनद्वित्वयुक्तं लेखनमेव स्वाभाविकतरं सरलं युक्तियुक्तञ्च भवति। तथाप्येतस्मिन् विषयेऽपि एतस्मिन् पुस्तकेऽधुना प्रचलिता व्यञ्जनद्वित्वाकरणरीतिरेवाङ्गीकृता, काठिन्यभ्रमादिपरिहारार्थम्। व्यञ्जनद्वित्व-प्रवृत्तिनिदर्शनाय नीतिश्लोकेषु व्यञ्जनद्वित्वं प्रयुक्तमस्ति, पद्योच्चारणे द्वित्वयुतोच्चारणस्य स्वाभाविकतरत्वात्। एतस्मिन् विषयेऽपि जागरणे जाते तु उच्चारणानुकूलमेव लेखनं प्रचारयितुं वयं प्रयतिष्यामहे।

उपर्युक्तेषु विषयेषु विशेषज्ञानं वाञ्छद्भिस् तद्विषये सम्यक् चिन्तनं कर्तुमिच्छद्भिर् जनै: स्वाध्यायशाला-कुटुम्बेन प्रकाशिताया: कौण्डिन्न्यायनशिक्षाया अध्ययनं कृत्वा सम्बद्धविषयाणां मननं कर्तुमुचितमस्ति।

उपर्युक्तेषु विषयेषु प्रबोधे विवेके च सुकरतां कर्तुं सारण्या अपि ते विषया: प्रस्तूयन्ते-

## सारणी

| विषया: | इदानीं प्रचलित: पक्ष: | | स्वाभाविकतरश् शुद्धश् च प |
|---|---|---|---|
| | लेखे | उच्चारणे | लेखे उच्चारणे च |
| १. वर्णा: | ऋषि: | रिसिहि | ॠषि: |
| | लृकार: | ऌिकारह् | ऌकार: |
| | अंश: | अम्सह् (अन्सह् , अङ्सह्) | अंश: |
| | दु:खम् | दुक्खम् | दुᳵखम् |
| | वनम् | ब(व)नम् | वनम् |
| | शिशु: | सिसुहु | शिशु: |
| | षट्पद: | स(ख)ट्पदह् | षट्पद: |
| २. संयोगा: | इक्षु: | इच्छ्युहु | इक्ष्षु: |
| | यज्ञ: | यग्यँह | यज्ञ्ञ: |
| | आह्निकम् | आन्हिकम् | आहन्निकम् |
| | ब्राह्मण: | ब्राम्हणह् | ब्राह्म्मण: |
| | बाह्य: | बाह्यह् (बाय्ह्यह्) | बाह्य्य: |
| ३. व्यञ्जनद्वित्वम् | वाक्यम् | वाक्क्यम् | वाक्क्यम् |
| | उच्यते | उच्च्यते | उच्च्यते |
| | पठ्यते | पट्ठ्यते | पट्ठ्यते |
| | कथ्यते | कत्थ्यते | कत्थ्यते |
| | प्राप्यते | प्राप्प्यते | प्राप्प्यते |
| | पश्यति | पस्स्यति | पश्श्यति |
| | मनुष्य: | मनुस्स्य(ख्ख्य)ह् | मनुष्ष्य: |
| | बालकस्य | बालकस्स्य | बालकस्स्य |
| ४. सन्धि: | | | |
| (क) स्वरसन्धि: | माता अस्ति | माता अस्ति | मातास्ति |
| | इति अभणीत् | इति अभणित् | इत्यभणीत् |
| (ख) व्यञ्जनसन्धि: | | | |
| तृतीयवर्णभाव: | चित्रकात् बिभेति | चित्त्रकाद् बिभेति | चित्त्रकाद् बिभेति |
| नकारविकार: | एडकान् चारयति | एडकाम् चारयति | एडकांश् चारयति |
| मकारानुस्वार-परसवर्णभाव: | कार्यं कुरुते | कार्यम् कुरुते | कार्यङ् कुरुते |
| | चक्राभ्यां चलति | चक्काभ्याम् चलति | चक्काभ्याञ् चलति |
| | ढक्कां नादयति | ढक्काम् नादयति | ढक्कान् नादयति |
| | गां ताडयति | गाम् ताडयति | गान् ताडयति |
| | पत्रं पठति | पत्त्रम् पठति | पत्त्रम् पठति |
| | विद्यालयं याति | विद्यालयम् याति | विद्यालयँ याति |
| | लगुडं लाति | लगुडम् लाति | लगुडल्ँ लाति |
| | घटिकां विलोकयति | घटिकाम् विलोकयति | घटिकाव्ँ विलोकयति |
| मकारानुस्वारभाव: | बालकं रक्षति | बालकम् रच्छ्यति | बालकं रक्ष्षति |
| | बालकं शाययति | बालकम् सायपति | बालकं शाययति |
| | कालं षट्पदं पश्यति | कालम् स(ख)ट्पदम् पस्स्यति | कालं षट्पदम् पश्श्यति |
| | छत्रं समादत्ते | छत्त्रम् समादत्ते | छत्त्रं समादत्ते |
| | धनं हरते | धनम् हरते | धनं हरते |
| विसर्गजिह्वामूलीयभाव: | बालक: किं कुरुते | बालकह् किम् कुरुते | बालकᳵ किङ् कुरुते |
| विसर्गोपध्मानीयभाव: | बालक: पठति | बालकह् पठति | बालकᳶ पठति |
| विसर्गशकारभाव: | शकट: चक्राभ्यां चलति | सकटह् चक्काभ्याम् चलति | शकटश् चक्काभ्याञ् चलति |
| | बालक: शेते | बालकह् सेते | बालकश् शेते |
| विसर्गषकारभाव: | बालक: टेकते | बालकह् टेकते | बालकष् टेकते |
| | बालक: षट्पदं पश्यति | बालकह् स(ख)ट्पदम् पस्स्यति | बालकष् षट्पदम् पश्श्यति |
| विसर्गसकारभाव: | बालक: तिष्ठति | बालकह् तिष्ठति | बालकस् तिष्ठति |
| | बालक: सन्तुष्यति | बालकह् सन्तुस्स्यति | बालकस् सन्तुष्ष्यति |
| विसर्गौकारभाव: | कुक्कुर: धावति | कुक्कुरह् धाब(व)ति | कुक्कुरो धावति |
| | घोटक: अपि धावति | घोटकह् अपि धाब(व)ति | घोटकोऽपि धावति |
| विसर्गरेफभाव: | अग्नि: ज्वलति | अग्निहि ज्वलति | अग्निर् ज्वलति |

संस्कृतस्य शास्त्रीयेषु ग्रन्थेषु उच्चकोटिक-साहित्यिक-ग्रन्थेषु च प्रयुक्तानां प्रातिपदिकानां धातूनाञ्चाऽपेक्षया नैपालीयाद्याधुनिक-भाषाणां निकटवर्तिना संस्कृतभाषाया: प्रातिपदिकानां धातूनाञ्च प्रयोग: नैपालीयभाषादिभाषिणां बालकानां कृते सरलो भवतीति आरम्भिककक्षापुस्तकेषु तादृशानामेव प्रातिपदिकानां धातूनाञ्च मुख्यतया प्रयोगस्य सरणिं गृहीत्वा एतत् पाठ्यपुस्तकं विरचितं वर्तते ।

एतत् , इदम् , अदस् , तत् इत्येतेषां प्रातिपदिकानां प्रयोगे "इदम: प्रत्यक्षगत समीपतरवर्ति चैतदो रूपम्। अदसस् तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" इत्यादिका वस्तुस्थितिर् निरन्तरं स्मृता वर्तते ।

अन्यै: संस्कृतपाठ्यपुस्तकलेखकै: सरलीकरणं व्यपदिश्य भूतार्थे अद्यतनेऽपि लङ्लकारस्य प्रयोग: क्रियते । किन्तु तादृश: प्रयोग: संस्कृतभाषाया: पाणिनीय-व्याकरणान्वाख्यातस्य स्वभावस्य प्रतिकूलोऽस्ति । तस्मादस्माभि: संस्कृतभाषाया: पाणिनीय-व्याकरणान्वाख्यात-स्वभावमनुसृत्याऽत्र सामान्ये भूते लुङ्लकारस्य प्रयोग: कृतो वर्तते । भूतविशेषे यथायथं लङो लिटो वा प्रयोगोऽपि निदर्शनरूपेण कृतोऽस्ति ।

अत्र प्रातिपदिकविभक्त्यव्ययादीनां प्रयोगे भाषागत-स्वाभाविकताया अनुसरणं सावधानतया कृतं वर्तते । अभ्यासवर्धनाय पूर्वस्मिन् पाठे पठितानां पदानां वाक्यानां चोत्तरस्मिन् पाठेऽपि यथौचिति प्रयोग: कृतोऽस्ति ।

पुर्ल्लिङ्गकेषु प्रातिपदिकेषु अस्मिन् पाठ्यपुस्तके अकारेकारोकारान्त-प्रातिपदिकानामेव प्रचुरतया समावेश: कर्तव्य इति नैपालीय-भाषाभाषिबालकानां कृते शिक्षणे सुगमान्यपि धनी इत्यादिकानि प्रातिपदिकरूपाणि त्यक्त्वा धनिक इत्यादीनि प्रातिपदिकरूपाणि प्रयुक्तानि सन्ति । हिण्डते छुपति इत्यादिका: प्रयोगा इदानीमुपलभ्यमाने संस्कृतवाङ्मये अप्रचलिता:, तथापि नैपालीयाद्याधुनिकभाषाणां निकटे स्थिता: पाणिनीयधातुपाठसम्मताश् चेति हेतोरत्र पाठ्यपुस्तकमालायां परिगृहीता: । एवमेव अमरकोषादिप्रचलितकोषेषु अनुपलभ्यमानान्यपि कौण्डक-चित्रकपोत-चूडिका-ऽषाडवराग-दोरक-झरणक- सेविकाऽऽदि-प्रातिपदिकान्यपि आवश्यकतानुसारं यथास्थानं प्रयुक्तानि ।

बालानां कृते सुबोधानां दैनन्दिने व्यवहारे आगन्तृणाम् अपि पदार्थानां वाचकानि कानि चन पदानि तु संस्कृतभाषाया इदानीं दैनन्दिन-लौकिकव्यवहाराद् अपसृतत्वात् शिक्षकाणामपि कृते दुर्बोधानि स्युरिति तेषां सपर्यायाणाम् उल्लेखोऽत्र क्रियते– *कृष्णमृग: = कृष्णसार:, अजिनम् = चर्म, सुकूर्चक: = शोभनश्मश्रुक:, कुसुम्भ: = कमण्डलु:, वन्दारु: = अभिवादक:, मन्दार: = पारिजात:, बन्धुर: = मनोहर:, सिन्धुरानन: = गजानन:, मधुकरी = मधुमक्षिका, हिण्डामहे = चलाम:, प्रतिमुञ्चते = परिधत्ते, विह्वयते = आह्वयति, कौण्डकम् = कुण्डे पाचितं पशुखाद्यम् , चित्रकपोत: = ढुकुर्कुर:, चूडिका = काचवलय:, अषाडवराग: = कट्वम्ललवणप्रधानोऽवदंशविशेष:, कण्टकिफलम् = पनसम् , जतूका = अजिनपत्रा, मर्कटक: = ऊर्णनाभ:, दोरक: = रज्जु:, गलकम्बल: = सास्ना, झरणका: = निर्झरा:, सेविकम् = सेवसदृशफलविशेष:, मिष्टखादिका = सुखभक्षिका = लड्डूकादिकं मधुरं खाद्यं वस्तु, तिर्यक्सङ्ग्रहालय: = पशुपक्षिसरीसृपसङ्ग्रहालय:, क्षैरेयम् = पायस:, मार्गण: = याचक:, स्वाणुक: = लघुक:, लुग्नम् = स्यूतं वसनम् , लगयति = परिधत्ते, शुष्कयति = शुष्कं कुरुते, चक्रकटी = चक्राकारा कटी, खाद्यकम् = लघुभोज्यम् , पल्वलम् = अल्पं सर:, तालकम् = कपाटनिरोधनयन्त्रम्, पिशीलकम् = लघु स्थालम् , तालिका = कुञ्चिका, पाटला = श्वेतरक्ता, पतङ्ग: = सूर्य:, अनुश्रव: = वेद:, धानुष्क: = धन्वी, झोलिका = गोणीतरी, केलकम् = कदलीफलम् , मकाय: = मर्कटान्नम् , किंशुक: = पलाश: ।*

वैदिकशास्त्रपरिचयस्य लगधप्रोक्तवेदाङ्गज्योतिषानुकूलकालज्ञानस्य उपवेदान्तर्गतस्याऽऽयुर्वेदस्य च पद्यात्मकानि लघूनि प्रकरणानि शास्त्ररसिकानां जनानां विशेषत उपयोगाय वैदिकमूलशास्त्रपरिचयाय च समावेशितानि सन्ति । तत्र वैदिकमासानां सूर्यायणापेक्षिचान्द्रमासत्वं च विशेषत: स्फुटीकृतं वर्तते । षष्ठे: संवत्सराणां विषये संवत्सरपरिवत्सरादिवत्सरज्ञानविषये च विचार: प्रस्तुतोऽस्ति ।

## ५. पठन-पाठन-प्रक्रिया

अत्र ब्रह्म-विष्णु-रुद्र-गणेश-सरस्वतीस्तोत्राणि अवश्यपठनीयत्वेन सङ्गृहीतानि न सन्ति । तथापि शिक्षकै: अभिभावकैश्च तानि यथारुचि परिग्रहीतुं शक्यन्ते ।

१) पाठनायैकं पुस्तकं शिक्षकेण स्वहस्ते एव धारणीयम् , २) अत्र दत्तानां पाठानां विभागं कृत्वा एकस्मै दिनाय एक: उपपाठ: कल्पनीय:, ३) एकस्मिन् दिने सामान्यतया पञ्चषाणि वाक्यानि पाठनीयानि, ४) तत्र कक्षायां सर्वप्रथमं शिक्षकेण तस्य दिवसस्य पाठो धीरेण गम्भीरेण स्वरेण विलम्बितया वृत्त्या स्फुटतया सर्वश्राव्यतया त्रिवारं श्रावणीय:, ५) तत: अर्थश्च बोधयितव्य:, ६) अर्थ: प्रयोगेणैव बोधयितव्य:, अत्यन्ताऽवश्यकत्वे एव अनुवाद आश्रयणीय:, ७) ततो विद्यार्थिभिरपि एकैकश: कृत्वा उच्चारणं कारयितव्यम् ८) उच्चारणे विद्यार्थिभि: प्रत्येकं कृता दोषा: संशोध्या:, ९) तत: शिक्षकेण एकस्मिन् वाक्ये उच्चारिते तदनुसारमेव सर्वैर् विद्यार्थिभिस् तद् वाक्यम् उच्चारणीयम् , एवं बहुवारं कर्तव्यम् , १०) ततो

विद्यार्थिभिरर्थोऽवबुद्ध उत न इति परीक्षा कर्तव्या, ११) यदि एकेन विद्यार्थिना अर्थो नाऽवबुद्धोऽवगम्यते तदा त वाक्यार्थो बोधयितव्यः, यदि सर्वैरेवार्थो नाऽवबुद्धोऽवगम्यते तदा स पाठः पुनः पाठयितव्यः, १२) पुस्तके दत्तान् प्रश्नान् शिक्षकेण पृष्ट्वा विद्यार्थिभ्य उत्तराणि ग्रहीतव्यानि, १३) शिक्षकेण यथासम्भवं क्रिया-सम्पादनादेशादिना व्यवहारद्वाराऽपि विद्यार्थिनां संस्कृतभाषाबोधः कारयितव्यः, तदर्थम् उपविश, उत्तिष्ठ, जालम् उद्घाटय, द्वारं पिधेहि, पाठम् पठ, कालपट्टं विलोकय, चित्रं लिख, स्वनाम लिख, अभ्यन्तर् आगच्छ, बहिर् गच्छ, अर्थम् अज्ञासीः ? अर्थं भण इत्यादिकानां वाक्यानां प्रयोगः कर्तव्यः । तादृशानां वाक्यानां मौखे प्रयोगे विद्यार्थिनोऽपि प्रोत्साहनीयाः । यथासम्भवं विद्यार्थिभिः सह सर्वोऽपि संलापः संस्कृतभाषयैव कर्तव्यः ।

सुदीर्घपरम्परागतासु रागात्मकगेयतायुतासु पद्यबद्धरचनासु अत्यन्तगभीरभाववत्सु सुभाषितेषु च विद्यार्थिनामभिरुचिं जागरितां कर्तुमत्र स्वल्पानि काव्यपद्यानि नीतिपद्यानि च दत्तानि सन्ति । बाल्यात् प्रभृत्येव बालकाः एतादृशानां पद्यानां लयबद्धतया पठनस्याऽभ्यासं कुर्युस्तर्हि ते स्वपरम्परातः अपगता न स्युरिति एतानि पद्यानि अत्र सङ्गृहीतानि सन्ति । कक्षायाम् एतेषां पद्यानां श्रावणं शिक्षकेण भूयोभूयः कार्यम् । एतेषां पद्यानां कण्ठस्थीकरणे विद्यार्थिनः प्रोत्साहनीयाः । अत्र अन्यदीयेषु अपि पद्येषु क्व चिद् आवश्यकं परिवर्तनमपि कृतमस्ति । एतेषु पद्येषु भाषिक-दृष्ट्या कक्षानुरूपताया अभावोऽपि अस्माभिः सोढव्य एव । अत्र अर्थावबोधनमपि गौणमेवेदानीम् ।

अस्मिन् पुस्तके परिशिष्टे अष्टानां प्रातिपदिकानां सर्वासु विभक्तिषु सर्वेषु वचनेषु च रूपाणि दत्तानि सन्ति । तथा च त्रयोदशानां धातूनां सप्तानां लकाराणां सर्वेषु पुरुषेषु सर्वेषु वचनेषु च रूपाणि दत्तानि सन्ति । एतानि रूपाणि प्रातिपदिक-धातु-रूपाणीत्थमागच्छन्ति इति बोधाय दत्तानि सन्ति, न अनिवार्यतया कण्ठस्थीकरणाय । कानि चन वैदिकानि रूपाण्यपि तत्रतत्र कोष्ठकेषु सूक्ष्मैरक्षरैर् दत्तानि सन्ति । तेषां यथारुचि अभ्यासः कर्तव्यः कारयितव्यश्च । रूपावल्याष् टिप्पणीषु दिक्प्रदर्शनाय प्रस्तुतानि रूपविशेषप्रयोगयुतानि पद्यानि च विद्यारसिकैः कण्ठस्थीकर्तुं कण्ठस्थीकारयितुं चोचितानि । दत्त-प्रातिपदिकरूपावली-धातुरूपावल्योरभ्यासे कृते तयोरुपयोगं कृत्वा पाठ्यपुस्तकप्रदर्शितमार्गेण अन्या अपि वाक्यरचनाः कर्तुं कारयितुं च शक्यन्ते ।

परिशिष्टेषु येऽन्ये विषयाः समाविष्टाः सन्ति ते वैदिकशास्त्राणां सामान्यं परिचयं प्राप्तुमिच्छुकानां वैदिकीं कालगणनापरिपाटीम् आयुर्वेदीयं स्वोपयोगि किञ्चिद् ज्ञानं च लब्धुमिच्छुकानां कृतेऽत्र समाविष्टाः सन्ति । ते विषयाः अनिवार्यतया शिक्षणीया न सन्ति । यः अभिभावकः विद्यालयो वा इच्छति स एतस्य भागस्यापि पाठनं कर्तुं शक्नोति । एतेषां विषयाणाम् अपि स्वेच्छया कण्ठस्थीकरणं क्रियते तर्हि तद् अत्यन्तम् उपयोगि भवेत् ।

आत्मनः बालकान् गम्भीररूपेण संस्कृते प्रवृत्तान् कर्तुं ये वाञ्छन्ति ते समीपस्थे विद्यालये संस्कृतपाठनस्य स्वाभीष्ट-रूपायां व्यवस्थायामसत्यामपि स्वगृहे एव एतां व्यावहारिक-संस्कृत-पाठ्यपुस्तकमालां प्रारम्भतः क्रमेण पाठयित्वा स्वोद्देश्यं प्राप्तुं शक्नुवन्तु इति विचार्य तदनुकूलतां विधातुम् अत्र प्रथमे पुस्तके गणेशस्तोत्रादिकं सर्वं समाविष्टमस्ति, वर्णमाला-सम्बद्धा सामग्री च दत्ता वर्तते, परिशिष्टञ्च योजितमस्ति । विद्यालया अपि एतान् विषयान् स्वेच्छया परिग्रहीतुं शक्नुवन्ति ।

एषोऽस्माकं संस्कृत-शिक्षणरीतेः स्वगृहाद् बहिः प्रयोगस्य द्वितीयः प्रयासो वर्तते। अतोऽत्र अनुभवस्य न्यूनतया बहवो दोषाः प्रविष्टा भवेयुः । तन्निराकरणाय संस्कृतशिक्षाविदां शिक्षकाणामभिभावकानां च सहयोगः प्रार्थ्यते ।

## ६. साधुवादार्पणम्

एतस्य पुस्तकस्य रचनायां सर्वविधानि निर्देशनानि दत्त्वा एतत् पुस्तकमेतादृशरूपेण निष्पन्नं कर्तुं पथप्रदर्शनं कृतवतां सुगृहीतनाम-पूजनीय-तातपादानामाचार्यशिवराजकौण्डिन्न्यायनमहोदयानां सान्निध्यमेवैतस्य पुस्तकस्य प्रकाशने सर्वदा सर्वथा प्रेरकं सफलतामूलं चास्तीति विज्ञापयामि ।

एतस्य पुस्तकस्य मुद्रणाय दानसङ्कलन-सुसङ्गमकयोजन-मुद्रणादिकार्याणां सुसम्पादने विशिष्टं नियामकत्वं कृत्वा एतस्य पुस्तकस्य एतादृशरूपेण प्रकाशने महत् कार्यं कृतवतः श्रीमतः अग्रजान् आमोदवर्धनकौण्डिन्न्यायनमहोदयान् प्रति कृतज्ञतां व्यक्तीकरोमि । प्रमुद्रणसंशोधनादिकार्ये सहयोगं कृतवतः प्रियंवदाम्बाकौण्डिन्न्यायनी - सुमोदवर्धनकौण्डिन्न्यायन-सम्मोदवर्धनकौण्डिन्न्यायन-वशंवदाम्बाकौण्डिन्न्यायन्यतिसम्मोदवर्धनकौण्डिन्न्यायनान् प्रति साधुवादान् व्याहरामि । वशंवदाम्बा सर्वाणि चित्राण्यपि अलेखीदिति तस्यै विशेषतः साधुवादान् ददामि । सुसङ्गमकयोजनकार्ये क्रियमाणे भूयोभूयो वर्णपदवाक्यपरिवर्तनयुतमस्माभिः कृतं कष्टदायि संशोधनमपि संस्कृतभाषा-प्रचारं प्रति सद्भावनया प्रसन्नतयैव कृतवन्तं श्रीमन्तं विनोदघिमिरेमहाभागं प्रति च साधुवादान् व्याहराम्यहम्-

**प्रमोदवर्धनः कौण्डिन्न्यायनः**
स्वाद्ध्यायशालाकुटुम्बगृह्यः

# स्तोत्राणि



ब्रह्मस्तोत्रम्

शुक्लाम्बरं कृष्णमृगाजिनाङ्कितं
सुकूर्चकं विश्वसृजं चतुर्मुखम् ।
कुसुम्भदण्डस्रुवदर्भहस्तकं
सरस्वतीशं कमलासनं भजे ॥

विष्णुस्तोत्रम्

सशङ्खचक्रं सकिरीटकुण्डलं
सपीतवस्त्रं सरसीरुहेक्षणम् ।
सहारवक्षस्स्थलकौस्तुभश्रियं
नमामि विष्णुं शिरसा चतुर्भुजम् ॥





रुद्रस्तोत्रम्

कर्पूरगौरं करुणावतारं
संसारसारं भुजगेन्द्रहारम् ।
सदा वसन्तं हृदयारविन्दे
भवं भवानीसहितं नमामि ॥



गणेशस्तोत्रम्

वन्दे वन्दारुमन्दारमिन्दुभूषणनन्दनम् ।
अमन्दानन्दसन्दोहबन्धुरं सिन्धुराननम् ॥



सरस्वतीस्तोत्रम्

शुक्लां ब्रह्मविचारसारपरमा-
माद्यां जगद्व्यापिनीम्
वीणापुस्तकधारिणीमभयदां
जाड्यान्धकारापहाम् ।
हस्ते स्फाटिकमालिकां विदधतीं
पद्मासने संस्थिताम्
वन्दे तां परमेश्वरीं भगवतीं
बुद्धिप्रदां शारदाम् ॥

**प्रथमः पाठः**





घोटकः धावति।



कुक्कुटौ वाश्येते।



कुक्कुराः बुक्कन्ति।



सूर्यः उदेति।



विमानम् उड्डयते।



पुत्तलिकाः उड्डयन्ते।



मयूरः नृत्यति।



बालिका हसति।



कविः लिखति।



अग्निः ज्वलति।



अग्नी ज्वलतः।



सर्वे अग्नयः ज्वलन्ति।



नदी वहति।



नद्यौ वहतः।



नद्यः वहन्ति।



पितामही उपविशति।



मधुकर्यौ उड्डयेते।



नर्तक्यः नृत्यन्ति।



पशुः उत्तिष्ठति।



पशू उत्तिष्ठतः।



सर्वे पशवः उत्तिष्ठन्ति।



शिशुः शेते।



भ्राता खेलति।



गौः तिष्ठति।



त्वं रोदिषि।



युवां खेलथः।



यूयं हसथ।



अहं लिखामि।



आवां पठावः।



वयं हिण्डामहे।

१. घोटक: किं कुरुते ? घोटक: धावति ।

२. कुक्कुरा: किं कुर्वते ?

३. पुत्तलिका: किं कुर्वते ?

४. अग्नि: किं कुरुते ?

५. नदी किं कुरुते ? नदी वहति ।

६. शिशु: किं कुरुते ?

७. पितामही किं कुरुते ?

८. भ्राता किं कुरुते ?

९. आवां किं कुर्वहे ? युवां खेलथ: ।

१०. यूयं किं कुरुध्वे ? वयं हिण्डामहे ।

(एवमेव शिक्षकैरन्येऽपि प्रश्ना: प्रष्टव्या:, उत्तराणि च प्राप्तव्यानि)

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि -

| | |
|---|---|
| अग्रज: | |
| बालक: | |
| बालिका | खेलति |
| भ्राता | खेलसि |
| बालिके | खेलामि |
| बालका: | खेलत: |
| बालकौ | खेलथ: |
| त्वम् | खेलाव: |
| यूयम् | खेलन्ति |
| युवाम् | खेलथ |
| अहम् | खेलाम: |
| आवाम् | |
| वयम् | |



बिडाल: मूषकं खादति।



सारस: मत्स्यं खादति।



राम: नखान् निकृन्तति।



शिक्षक: सर्वान् छात्रान् पाठयति।



छात्र: घटिकां पश्यति।



माया पादुके प्रतिमुञ्चते।



अम्बा अग्निं ज्वालयति।



छात्रा: गुरुं पृच्छन्ति।



बालिका विपणीं गच्छति।



प्रेक्षका: नर्तकी: प्रेक्षन्ते।



अम्बा त्वां विह्वयते।



पथिकः अस्मान् पश्यति।

१. बिडालः किं खादति ? बिडालः मूषकं खादति ।

२. सारसः किं खादति ?

३. रामः किं कृन्तति ?

४. कः कान् पाठयति ?

५. छात्रः किं पश्यति ?

६. अम्बा किं ज्वालयति ?

७. छात्राः कं पृच्छन्ति ?

८. अम्बा कं विह्वयते ? अम्बा त्वां विह्वयते ।

(एवमेव शिक्षकैरन्येऽपि प्रश्नाः प्रष्टव्याः, उत्तराणि च प्राप्तव्यानि)

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि -

| | | |
|---|---|---|
| | त्वाम् | विह्वयते |
| अम्बा | माम् | विह्वयन्ते |
| पितामही | आवाम् | पश्यति |
| भगिनी | युवाम् | पश्यन्ति |
| भ्राता | अस्मान् | पाठयति |
| पिता | युष्मान् | पाठयन्ति |
| शिक्षकः | छात्रान् | गच्छति |
| शिक्षकाः | नर्तकीः | गच्छन्ति |
| प्रेक्षकाः | विपणीम् | वहतः |
| पथिकाः | हलम् | कर्षतः |
| घोटकौ | रथम् | प्रेक्षन्ते |
| ऋषभौ | शकटम् | |

*तृतीयः पाठः*





बालकः कलमेन लिखति।



कृषाणः कुद्दालेन वाटीं खनति।



मनुष्यः पादाभ्यां हिण्डते।



मनुष्याः नेत्राभ्यां पश्यन्ति।



पथिकः अञ्जलिना जलं पिबति।



मृगाः मुनिभिः सह उपविशन्ति।



सौचिकः सूच्या वस्त्रं सीव्यति।



बालिका सम्मार्जन्या अवकरम् अवहरति।



अग्रजः भगिनीभ्यां सह खेलति।



पशुः पशुना सह चरति।



राम: युष्माभि: सह खेलति।



हरि: अस्माभि: सह पठति।

१. बालक: केन लिखति ? बालक: कलमेन लिखति ।

२. कृषक: केन वाटीं खनति ?

३. मनुष्य: केन हिण्डते ?

४. मनुष्या: केन पश्यन्ति ?

५. पथिक: केन जलं पिबति ? पथिक: अञ्जलिना जलं पिबति ।

६. मृगा: कै: सह उपविशन्ति ?

७. सौचिक: केन वस्त्रं सीव्यति ?

८. बालिका केन अवकरम् अवहरति ?

९. राम: केन सह खेलति ?

१०. हरि: केन सह पठति ? हरि: अस्माभि: सह पठति ।

(एवमेव शिक्षकैरन्येऽपि प्रश्ना: प्रष्टव्या:, उत्तराणि च प्राप्तव्यानि)

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि -

| | | | |
|---|---|---|---|
| शिक्षका:<br>शिक्षिका<br>छात्रा:<br>त्वम् | खटिकया<br>कलमेन | लिखति<br>लिखसि<br>लिखन्ति | |
| बालक:<br>बालिका:<br>त्वम्<br>अहम् | बालिकाभि:<br>त्वया<br>युवाभ्याम्<br>युष्माभि:<br>बालकै:<br>मया<br>आवाभ्याम्<br>अस्माभि: | सह | खेलति<br>खेलन्ति<br>खेलसि<br>खेलामि<br>उपविशति<br>उपविशसि<br>उपविशामि<br>उपविशन्ति |


नमो वागीश्वराय।


सरस्वत्यै नमः।


गणेशाय नमः।


ऋषिभ्यो नमः।


गुरवे नमः।


अग्नये स्वाहा।


गोपालः पशवे घासं ददाति।


गोपालः पशुभ्यां पलालं ददाति।


गोपालः पशुभ्यः कौण्डकं ददाति।


गृहिण्यः भिक्षवे भिक्षां ददति।


राजा कवये धनं ददाति।


भ्राता भगिन्यै पुस्तकं ददाति।



पिता तुभ्यम् उपानहौ ददाति।



भ्राता मह्यं छत्रं ददाति।

१. गोपाल: कस्मै घासं ददाति ? गोपाल: पशवे घासं ददाति ।

२. गृहिण्य: कस्मै भिक्षां ददति ?

३. राजा कस्मै धनं ददाति ?

४. भ्राता कस्मै किं ददाति ?

५. पिता कस्मै उपानहौ ददाति ?

(एवमेव शिक्षकैरन्येऽपि प्रश्ना: प्रष्टव्या:, उत्तराणि च प्राप्तव्यानि)

अधोलिखितानि पदानि प्रयुज्य यथासंभवमधिकानि वाक्यानि रचयितव्यानि -

| | | | |
|---|---|---|---|
| माता<br>पिता<br>भ्राता<br>प्रधानाध्यापक:<br>राजा<br>गोपाल:<br>त्वम्<br>अहम्<br>गृहिण्य: | पुत्राय<br>पुत्रीभ्याम्<br>पुत्र्यै<br>कविभ्य:<br>कवये<br>युष्मभ्यम्<br>तुभ्यम्<br>युवाभ्याम्<br>आवाभ्याम्<br>भिक्षवे<br>पशुभ्याम्<br>पशुभ्य:<br>मह्यम्<br>अस्मभ्यम् | पारितोषिकम्<br>पुस्तकम्<br>कलमानि<br>कदलीफलम्<br>भक्तम्<br>दुग्धम्<br>धनम्<br>पललम्<br>घासम्<br>भिक्षाम् | ददाति<br>ददति<br>ददासि<br>ददामि |
| इन्द्राय<br>देव्यै<br>गुरुभ्य: | | नम:<br>स्वाहा | |



हस्ती सिंहात् बिभेति।



वानरः कुक्कुरात् बिभेति।



हरिणाः चित्रकात् बिभ्यति।



शृगालाः व्याघ्रात् बिभ्यति।



चित्रकपोतः श्येनात् बिभेति।



सर्पः नकुलात् बिभेति।



बालकः कर्कटकात् बिभेति।



बालिका गण्डूपदात् बिभेति।



गृहं मुनष्यं वर्षात् रक्षति।



पक्वम् आम्रं वृक्षात् पतति।



क्षेत्रात् पिता आगच्छति।



माता वनात् आगच्छति।



सूर्यात् प्रकाश: आगच्छति।



तप्तात् पानीयात् बाष्प: आगच्छति।



अग्ने: धूम: उद्गच्छति।



बालिका धाराया: जलम् आनयति।



भगिनी पुष्पवाट्या: पुष्पाणि आनयति।



बालक: मधुकरीभ्य: बिभेति।



मुने: मृगा: न बिभ्यति।



त्वं वन्यात् पशो: बिभेषि।


शृगाल: मत् बिभेति ।


वन्या: पशव: अस्मत् बिभ्यति ।

१. हस्ती कस्मात् बिभेति ? हस्ती सिंहात् बिभेति ।

२. सर्प: कस्मात् बिभेति ?

३. गृहं मुनष्यं कस्मात् रक्षति ?

४. कस्मात् प्रकाश: आगच्छति ?

५. कस्मात् धूम: उद्गच्छति ?

६. बालिका कुत: जलम् आनयति ?

७. भगिनी कुत: पुष्पाणि आनयति ?

८. वन्या: पशव: कुत: बिभ्यति ?

(एवमेव शिक्षकैरन्येऽपि प्रश्ना: प्रष्टव्या:, उत्तराणि च प्राप्तव्यानि)

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि -

| | | |
|---|---|---|
| गृहिण्य:<br>मूषक:<br>बिडाल:<br>वानरा:<br>कुक्कुर:<br>व्याघ्र:<br>शृगाला:<br>पशव: | बालकात्<br>सिंहात्<br>बालिकाया:<br>भगिन्या:<br>बिडालात्<br>कुक्कुरात्<br>व्याघ्रात्<br>अग्ने:<br>त्वत्<br>युवाभ्याम्<br>युष्मत्<br>मत्<br>आवाभ्याम्<br>अस्मत् | बिभेति<br>न बिभेति<br>बिभ्यति<br>न बिभ्यति |



बालकस्य गृहमस्ति।



विमानस्य पक्षौ स्तः।



गण्डकस्य खड्गकः भवति।



बालिकायाः पादुके स्तः।



बालिकायाः चूडिकाः सन्ति।



मुनेः कुटी अस्ति।



कवेः लेखनी अस्ति।



अग्नेः ज्वाला रक्ता भवति।



पशोः पुच्छं भवति।



गुरोः गृहम् अस्ति।



नद्याः तीरे वृक्षाः सन्ति।



पुष्करिण्याः समीपे उद्यानम् अस्ति।



कुक्कुट्याः समीपे शावकाः सन्ति।



कर्कट्याः अषाडवरागः भवति।



कण्टकिफलस्य व्यञ्जनं भवति।



मूलकस्य व्यञ्जनं भवति।



स्वर्णस्य कुण्डले भवतः।



काष्ठस्य खट्वा भवति।



सर्पस्य विषं भवति।



अस्माकं विद्यालयः अस्ति।

१. कस्य गृहम् अस्ति ? बालकस्य गृहम् अस्ति ।

२. कस्य पक्षौ स्तः ?

३. कस्याः चूडिकाः सन्ति ?

४. कस्य कुटी अस्ति ? मुनेः कुटी अस्ति ।

५. कस्य पुच्छं भवति ?

६. कुत्र वृक्षाः सन्ति ? नद्याः तीरे वृक्षाः सन्ति ।

७. कुत्र उद्यानम् अस्ति ?

८. कस्य अषाडवरागः भवति ?

९. कस्य कुण्डले भवतः ?

१०. कस्य विषं भवति ?

११. कस्य विद्यालयः अस्ति ? अस्माकं विद्यालयः अस्ति ।

(एवमेव शिक्षकैरन्येऽपि प्रश्नाः प्रष्टव्याः, उत्तराणि च प्राप्तव्यानि)

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि -

| | | |
|---|---|---|
| बालकस्य<br>बालिकायाः<br>मुनेः<br>कवेः<br>गुरोः<br>पशोः<br>स्वर्णस्य<br>मनुष्यस्य<br>कृषाणस्य<br>तव<br>मम | कुटी<br>गृहम्<br>लेखनी<br>शृङ्गे<br>पुच्छम्<br>कुण्डले<br>हस्तौ<br>पादौ<br>नेत्रे<br>कर्णौ<br>मुखम्<br>क्षेत्रम्<br>कुद्दालः<br>हलम् | अस्ति<br>भवति<br>स्तः<br>भवतः |



मनुष्याः गृहे निवसन्ति।



मत्स्याः जले निवसन्ति।



कण्टकिफलं वृक्षे फलति।



कर्कटीफलं लतायां फलति।



मनुष्यः खट्वायां शेते।



सिंहः गुहायां शेते।



वने कृष्णसारः भवति।



वने भल्लूकः भवति।



वने शुकाः सारिकाः च भवन्ति।



हिमालयप्रदेशे मेषाः भवन्ति।



मर्कटकः जाले अवतिष्ठते।



श्येनाः चिल्लाः च आकाशे उपरि उड्डयन्ते।



कच्छपाः जले स्थले च निवसन्ति।



समुद्रे ग्राहाः भवन्ति।



वर्षासु मयूरः नृत्यति।



वर्षासु भेकाः रटन्ति।



बालकः अञ्जलौ पानीयं गृह्णाति।



यजमानः अग्नौ चरुं जुहोति।



पुत्तलिका अग्नौ पतति।



गृध्राः मृते पशौ निपतन्ति।



उलूका: जतुका: च रात्र्यां विचरन्ति।



हंसा: पुष्करिण्यां प्लवन्ते।



युवका: नद्यां प्लवन्ते।



वाट्यां चिचिण्ड: फलति।



वाट्यां घोषक: फलति।



कृषाणा: वाट्यां राजिकाशाकं रोपयन्ति।



कृषाणा: वाट्यां मूलकानि रोपयन्ति।



भ्राता त्वयि स्नेहं कुरुते।



मातापितरौ आवयो: स्नेहं कुर्वाते।



शिक्षका: अस्मासु स्नेहं कुर्वते।

१. मनुष्याः कुत्र निवसन्ति ? मनुष्याः गृहे निवसन्ति ।

२. सिंहः कुत्र शेते ?

३. कृष्णसारः कुत्र भवति ?

४. कच्छपाः कुत्र निवसन्ति ?

५. मयूरः कदा नृत्यति ?

६. गृध्राः कुत्र निपतन्ति ?

७. हंसाः कुत्र प्लवन्ते ?

(एवमेव शिक्षकैरन्ये(ऽ)पि प्रश्नाः प्रष्टव्याः, उत्तराणि च प्राप्तव्यानि)

अधोलिखितानि पदानि प्रयुज्य यथासंभवमधिकानि वाक्यानि रचयितव्यानि -

(क)

| | | |
|---|---|---|
| वने<br>पुष्करिण्याम्<br>पुष्पेषु<br>वाट्याम्<br>मासेषु<br>ऋतुषु<br>वर्षेषु | भल्लूकः<br>शृगालाः<br>व्याघ्रः<br>मृगाः<br>कमलानि<br>मत्स्याः<br>कच्छपाः<br>भ्रमराः<br>घोषकः<br>चिचिण्डः<br>पक्षौ<br>मासौ<br>अयने | भवति<br>भवतः<br>भवन्ति<br>तिष्ठन्ति<br>विकसन्ति<br>फलति |

(ख)

| | | | |
|---|---|---|---|
| हंसाः<br>युवकाः<br>यजमानः<br>शलभाः | पुष्करिण्याम्<br>नद्याम्<br>अग्नौ | प्लवन्ते<br>चरुं जुहोति<br>पतन्ति | |
| पिता<br>मातापितरौ<br>गुरवः<br>सख्यः | त्वयि<br>मयि<br>आवयोः<br>अस्मासु<br>पुत्रे | स्नेहं | कुरुते<br>कुर्वाते<br>कुर्वते |



पुत्र, गृहकार्यं कुरुष्व।



बालक, गणितं कुरुष्व।



बालक, आसनात् उत्तिष्ठ।



बालक, आसने उपविश।



बालकौ, कलहं न कुर्वाथाम्।



बालकाः, अङ्गने खेलत।



बालकाः, कलकलं न कुरुध्वम्।



बालिके, दुग्धं पिब।



बालिके, पानीयं पिबतम्।



बालिकाः, विद्यालयं गच्छत।



अग्ने, अस्मान् रक्ष।



कवे, एकं स्वरचितं श्लोकं श्रावय।



भगिनि, पुस्तकम् आनय।



भगिन्यौ, मया सह खेलतम्।



पितामहि, मह्यं भक्तं देहि।



गुरो, मम अभ्यासपुस्तिकां मह्यं देहि।

अधोलिखितानि वाक्यानि शुद्धानि कुरुध्वम्-

(क) बालक:, गृहकार्यं कुरुष्व ।

(ख) बालका, कलकलं न कुरुध्वम् ।

(ग) बालिका, जलं पिब ।

(घ) अग्नि, अस्मान् रक्ष ।

(ङ) भगिनी, पुस्तकम् आनय ।

(च) गुरु, मह्यं पुस्तिकां देहि ।

(छात्रान् एत पाठं पाठयित्वा यथासंभवमेतदनुसारं क्रियाकलापः कारयितव्यः

नवमः पाठः

# दीर्घसन्धिः

| | |
|---|---|
| अद्य मम गृहे कर्म अस्ति । | अद्य मम गृहे कर्मास्ति । |
| एतत् पुस्तकं मम अस्ति । | एतत् पुस्तकं ममास्ति । |
| अदः पुस्तकं तव अस्ति । | अदः पुस्तकं तवास्ति । |
| मम भ्राता अस्ति । | मम भ्रातास्ति । |
| तव पिता अस्ति । | तव पितास्ति । |
| विद्यालयात् बालिका आगच्छति । | विद्यालयात् बालिकागच्छति । |
| नगरात् पिता आगच्छति । | नगरात् पितागच्छति । |
| कूपात् महिला आगमत् । | कूपात् महिलागमत् । |
| भल्लूकं दृष्ट्वा बालिका चकिता अस्ति । | भल्लूकं दृष्ट्वा बालिका चकितास्ति |
| बालकः दधि ईक्षते । | बालकः दधीक्षते । |
| मम भगिनी इतः आगच्छति । | मम भगिनीतः आगच्छति । |
| मम भगिनी ईक्षणं कुरुते । | मम भगिनीक्षणं कुरुते । |
| हंसः साधु उड्डयते । | हंसः साधूड्डयते । |
| चिल्लः अपि साधु उड्डयते । | चिल्लः अपि साधूड्डयते । |
| वत्स, कुरु उपकारम् । | वत्स, कुरूपकारम् । |
| बालक, कुरु उपवासम् । | बालक, कुरूपवासम् । |
| एतत् लघु ऊर्णापिण्डम् अस्ति । | एतत् लघूर्णापिण्डम् अस्ति । |
| अदः गुरु ऊर्णापिण्डम् अस्ति । | अदः गुरूर्णापिण्डम् अस्ति । |

अधोलिखितेषु वाक्येषु सन्धिजं विकारं प्रयुज्य प्रदर्शयत –

(क) अद्य मम विद्यालये कर्म अस्ति ।
(ख) एतत् फलं तव अस्ति ।
(ग) अदः पुस्तकं मम अस्ति ।
(घ) अदः द्विचक्रिकयानं कस्य अस्ति ?
(ङ) मम माता अस्ति ।
(च) तव पिता अस्ति ।
(छ) बालिका आगमत् ।
(ज) भ्राता अगमत् ।
(झ) त्वं दधि इच्छसि ?
(ञ) अहं दधि इच्छामि ।
(ट) भगिनी ईक्षणं कुरुते ।
(ठ) पितामही ईक्षणं न कुरुते ।
(ड) बालकः साधु उत्तिष्ठति ।
(ढ) कुरु उपकारम् ।
(ण) लघु ऊर्णापिण्डं क्रीणीष्व ।
(त) गुरु ऊर्णापिण्डं नैव क्रीणीष्व ।

दशमः पाठः

# वर्तमाने लटः प्रयोगः

शिशवः शेरते। नर्तक्यः नृत्यन्ति। त्वं धावसि। यूयं हसथ। वयं खेलामः। माता रमेशं विह्स्वयते। अग्रजः त्वां विह्स्वयते। मित्राणि आवां विह्स्वयन्ते। माता फलानि क्रीणाति। छात्रौ पुस्तिकाः क्रीणीतः। बालिकाः मिष्टखादिकां क्रीणन्ति। अहं विद्यालयं गच्छामि। त्वम् अपि विद्यालयं गच्छसि। मम भगिनी विद्यालयं गच्छति। वयं सर्वे विद्यालयं गच्छामः। कृषाणाः दोरकेण भारं बध्नन्ति। माया सखीभिः सह संलपति। पथिकाः अञ्जलिना पानीयं पिबन्ति। माता पुत्राय भक्तं ददाति। माता पुत्राय दधि ददाति। पिता पुत्र्यै लेखनीं ददाति। अग्रजौ भगिनीभ्यः आम्रं दत्तः। श्रद्धालुः ब्राह्मणाय दानं दत्ते। दयालवः दीनेभ्यः वस्त्राणि ददते। शिक्षकः तुभ्यं पारितोषिकं ददाति। महिष्यः अस्मभ्यं दुग्धं ददति। सर्पः गरुडात् बिभेति। मृगाः सिंहात् बिभ्यति। त्वं कर्कटकात् बिभेषि। अहं सर्पात् बिभेमि। यूयं शृगालात् न बिभीथ। यूयं व्याघ्रात् बिभिथ। वयं भल्लूकात् न बिभिमः। वयं सिंहात् बिभीमः। हिमालयात् शीतः वातः आगच्छति। हिमालयात् बह्व्यः नद्यः प्रभवन्ति। पिता पण्यशालायाः लवणम् आनयति। पिता पण्यशालायाः शर्कराम् आनयति। पिता पण्यशालायाः तैलम् आनयति। पिता पण्यशालायाः वस्त्राणि आनयति। पिता पण्यशालायाः बहूनि वस्तूनि आनयति। कृषाणः वाट्याः घोषकान् आनयति। कृषाणः वाट्याः मूलकानि आनयति। बालकस्य गृहम् अस्ति। विमानस्य पक्षौ स्तः। चटकस्य पक्षौ स्तः। बालिकायाः पुस्तकानि सन्ति। ऋषभस्य गलकम्बलः अस्ति। घोषकस्य व्यञ्जनं भवति। कण्टकिफलस्य व्यञ्जनं भवति। मूलकानाम् अषाडवरागः भवति। पर्वते झरणकाः सन्ति। आकाशे तारकाः सन्ति। भ्राता अङ्गने खेलति। मत्स्याः जले खेलन्ति। बहवः कृषाणाः वाट्यां राजिकाशाकं रोपयन्ति। बहवः कृषाणाः वाट्यां मूलकानि रोपयन्ति।

(एवमेव परिशिष्टे दत्तानां धातूनां लटः सर्वाणि रूपाणि प्रयुज्य वाक्यानां रचने यथासम्भवं यथारुचि च छात्रैः अभ्यासः कारयितव्यः, तदर्थं दिक्प्रदर्शनरूपेण प्रथमं शिक्षकेण विविधाः वाक्यरचनाः कृत्वा प्रदर्शनीयाः)

अधोलिखितानि वाक्यानि लट्लकारान्तैः पदैः पूरयत-

(क) घोटकाः ................. ।
(ख) फुल्लानि ................. ।
(ग) युवां विद्यालयं ............ ।
(घ) वयं विद्यालयं ............... ।
(ङ) बालिका सखीभिः सह ... ।
(च) माता पुत्राय फलं ............ ।
(छ) त्वं व्याघ्रात् .............. ।
(ज) बालिकायाः काचवलयाः ......... ।
(झ) मम भ्राता ................ ।
(ञ) कृषाणः वाट्यां राजिकाशाकं ....... ।

एकादशः पाठः

# भूते लुङ्-लङ्-लिटां प्रयोगः

| | | |
|---|---|---|
| बालकः अद्य भक्तम् अखादीत् । | बालकः ह्यः रोटिकाम् अखादत् । | मयि बहिर्गते बालकः मम रोटिकां चखाद । |
| त्वं भक्तम् अखादीः ? | त्वं ह्यः किम् अखादः ? | मयि सुप्ते त्वं मम कदलीफलं चखादिथ । |
| अहम् अद्य सेविकम् अखादिषम् । | अहं ह्यः आम्रम् अखादम् । | निद्रितः अहम् अम्बया खादितं भक्तं चखद । |
| माया अद्य संस्कृतम् अपठीत् । | माया ह्यः इतिहासम् अपठत् । | मयि बहिर् गते माया मम निबन्धपुस्तकं पपाठ । |
| अद्य पानीयम् अपप्तत् । | ह्यः अपि पानीयम् अपतत् । | अद्य रात्र्याम् अपि पानीयं पपात । |
| रमेशः अद्य विपणीमगमत् । | रमेशः ह्यः विद्यालयम् अगच्छत् । | रमेशः माम् अपृष्ट्वा तिर्यक्सङ्ग्रहालयं जगाम |
| रामः अद्य वाट्यां सर्पम् अद्राक्षीत् । | रामः ह्यः वाटे नकुलम् अपश्यत् । | रामः एकल एव उद्याने भ्रमन् दिवसे सर्पं ददर्श । |
| मम भ्राता अद्य दिवा न अशयिष्ट । | मम भ्राता ह्यः नवीनायां शय्यायाम् अशेत । | मयि मामालयं गते मम भ्राता मम शय्यायां शिश्ये । |
| मम भगिनी बिडालात् कर्हि अपि न अभैषीत् । | मम भगिनी ह्यः वने शृगालात् अपि न अबिभेत् । | अद्य एकला भ्रमन्ती मम भगिनी नकुलात् अपि बिभाय |
| अद्य हरितालिकायां बालिकाः मन्दिरे अनर्तिषुः । | ह्यः बालिकाः विद्यालये वार्षिकोत्सवे अनृत्यन् । | दिव्या बालिकाः देव्या महिषासुरे हते ननृतुः किल |
| मम अग्रजः अद्य मां गणितस्य प्रश्नान् अप्राक्षीत् । | गुरुः ह्यः अस्मान् कठिनान् प्रश्नान् अपृच्छत् । | मयि अनुपस्थिते गुरुः कमपि प्रश्नं न पप्रच्छ । |
| कर्मकराः अद्य प्रभूतं कार्यम् अकार्षुः । | कर्मकराः ह्यः स्वल्पमेव कार्यम् अकुर्वन् । | कर्मकराः मयि अनुपस्थिते किमपि कार्यं न चक्रुः । |
| अद्य पिता रम्यरूपाणि वस्त्राणि अक्रैषीत् । | ह्यः माता मिष्टानि फलानि अक्रीणात् । | मयि विद्यालयं गते अग्रजः गेन्दुकं चिक्राय । |

(एतस्य पाठस्य वाक्येषु प्रयुक्तानां क्रियापदानां वैशिष्ट्यानि छात्राः बोधयितव्याः ।)

द्वादशः पाठः

# भविष्यति लृट्-लुटोः प्रयोगः

| | |
|---|---|
| रामः फलानि खादिष्यति । | रामः श्वः मिष्टान्नं खादिता । |
| त्वं किं खादिष्यसि ? | त्वं श्वः किं खादितासि ? |
| अहं रोटिकाः खादिष्यामि । | अहं श्वः क्षैरेयं खादितास्मि । |
| वयं संस्कृतं पठिष्यामः । | वयं श्वः इतिहासं पठितास्मः । |
| अद्य सायङ्काले पानीयं पतिष्यति । | श्वः पानीयमवश्यं पतिता । |
| रमा विपणिं गमिष्यति । | रमा श्वः विराटनगरं गन्ता । |
| सायङ्काले पिता क्षेत्रात् आगमिष्यति । | तवाऽग्रजः श्वः नगरात् आगन्ता । |
| अद्य मार्गे त्वं मृतं सर्पं द्रक्ष्यसि । | त्वं श्वः नगरात् आगतम् अग्रजं द्रष्टासि । |
| यूयम् अद्य भूम्यामेव शयिष्यध्वे । | यूयं श्वः नवीनायां शय्यायां शयिताध्वे । |
| अद्य मां शान्तं दृष्ट्वा शत्रवः न भेष्यन्ति । | श्वः युद्धे मां दृष्ट्वा शत्रवः भेतारः । |
| अद्य गुरुः अस्मभ्यं गृहकार्यं न दास्यति । | श्वः गुरुः अस्मभ्यं गृहकार्यं दाता । |
| पिता तुभ्यं फलानि दास्यति । | अग्रजः श्वः मह्यं मिष्टखादिकां दाता । |
| अद्य स्वागतकार्यक्रमे नर्तक्यः नर्तिष्यन्ति । | श्वः पर्वणि नार्यः मन्दिरे नर्तितारः । |
| अद्य गुरुः कठिनान् प्रश्नान् प्रक्ष्यति । | गुरुः श्वः प्रश्नान् न प्रष्टा । |
| अद्य त्वं मां न जेष्यसि । | त्वं श्वः हरिं जेतासि । |

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयत–

| | | | |
|---|---|---|---|
| रमेशः<br>रमा<br>बालकाः<br>माया<br>त्वम्<br>अहम्<br>युवाम्<br>आवाम्<br>यूयम्<br>वयम् | (श्वः)<br>(अद्य) | विराटनगरम्<br>व्यासनगरम्<br>मिष्टखादिकाम्<br>रोटिकाः<br>भक्तम्<br>पूपम्<br>फलम्<br>आम्रम् | गमिष्यति<br>गन्ता<br>खादिता<br>खादितासि<br>खादिष्यति<br>खादिष्यन्ति<br>खादितारः<br>खादितास्थः<br>खादिष्यसि<br>खादिष्यथः<br>खादिष्यथ<br>खादिष्यामि<br>खादितास्मि<br>खादिष्यावः<br>खादितास्वः<br>खादितास्मः |

(एतस्य पाठस्य वाक्येषु प्रयुक्तानां क्रियापदानां वैशिष्ट्यानि छात्राः बोधयितव्याः।)



सुशीलः बालकः गृहकार्यं कुरुते।



सुशीलौ बालकौ कलहं न कुर्वाते।



सुशीलाः बालकाः पुष्पविटपान् रोपयन्ति।



सुशीला बालिका सम्मार्जन्या अवकरम् अवहरति।



सुशीले बालिके कूपात् जलम् आनयतः।



सुशीलाः बालिकाः पाठं पठन्ति।



सुशीलं मित्रं प्रतिदिनं स्नाति।



सुशीले मित्रे विद्यालयं गच्छतः।



सुशीलानि मित्राणि मार्गणाय पणान् ददति।



सुन्दरी बालिका मधुरं व्याहरति।



हस्ती स्थूल: भवति।
शशक: स्वाणुक: भवति।



माया स्वच्छं लुग्नं लगयति।
राम: मलिनं लुग्नं लगयति।



श्रद्धालु: पुरुष: देवान् पूजयति।



दयालव: पुरुषा: दीनेभ्य: धनं ददति।

१. अधोलिखितानि वाक्यानि शुद्धानि कृत्वाऽभ्यासपुस्तिकायां सारयत–

(क) सुशील: बालकौ कलहं न कुर्वाते ।

(ख) सुशीली बालिका पाठं पठति ।

(ग) सुशील: बालिका: कथां शृण्वन्ति ।

(घ) सुन्दर: बालिका मधुरं व्याहरति ।

(ङ) सुशील: मित्रं स्वच्छ: लुग्नं लगयति ।

२. अधोलिखितानि पदानि प्रयुज्य यथासंभवम् अधिकानि वाक्यानि रचयत–

| | | |
|---|---|---|
| सुशीला<br>चतुरा<br>दु:शीला<br>सुन्दरी<br>श्रद्धालु:<br>दयालु:<br>सुशील:<br>चतुर:<br>दु:शील: | बालिका<br>पुत्री<br>बालक:<br>छात्र:<br>पुरुष: | गृहकार्यं कुरुते<br>न पठति<br>स्वच्छं लुग्नं लगयति<br>मलिनं लुग्नं लगयति<br>सर्वान् पीडयति<br>मधुरं व्याहरति<br>प्रतिदिनं स्नाति<br>दानं ददाति<br>परोपकारं कुरुते |

## एतद्-इदम्-अदस्-प्रातिपदिकानां प्रयोग:



एष: बालक: हृष्टपुष्ट: अस्ति।



एतौ द्वौ बालकौ कृशौ स्त:।



एते त्रय: बालका: चञ्चला: सन्ति।



एषा बालिका चतुरा अस्ति।



एते द्वे बालिके सुन्दर्यौ स्त:।



एता: तिस्र: बालिका: सुशीला: सन्ति।



एतत् फलं मधुरम् अस्ति।



एते द्वे फले अम्ले स्त:।



एतानि चत्वारि फलानि पक्वानि सन्ति।



अयं बालक: विद्यालयं गच्छति।



इमौ द्वौ अश्वौ रथं वहतः।



इमे त्रयः कुक्कुटाः वाश्यन्ते।



इयं बालिका कूपं गच्छति।



इमे द्वे पेटिके भरिते स्तः।



इमाः पञ्च मालाः शोभनाः सन्ति।



इदं वनं घनमस्ति।



इमे द्वे गृहे सदृशे स्तः।



इमानि भाण्डानि पुराणानि सन्ति।



असौ वृक्षः वटः अस्ति।



अमू ऋषभौ धान्यं खादतः।



अमी मनुष्याः क्षेत्रे कर्म कुर्वन्ति।



असौ पुष्पवाटी रमणीया अस्ति।



असौ नौका इतः आगच्छति।



अमू महिष्यौ क्षेत्रे चरतः।



अमूः तारकाः कृत्तिकाः सन्ति।



अदः पर्वतकूटम् उच्चं वर्तते।



अमू नक्षत्रे उज्ज्वले स्तः।



अमूनि कमलानि विकसितानि सन्ति।



एतस्मै बालकाय जलं देहि।



एतया बालिकया सह खेल।



एतत् फलं खाद।



अस्मात् कुक्कुरात् न बिभिहि।



अस्या: बालिकाया: झोलिका अस्ति।



अस्य गृहस्य छादने काक: अस्ति।



अमुं वृक्षं परिचिनोषि ?



अमुष्यां नद्यां ग्राहा: सन्ति।



अमुष्मिन् वने सिंह: वर्तते।



अमुष्मिन् क्षेत्रे प्रभूतं धान्यं फलति।

(शिक्षकेण एतद् इदम् अदस् इत्येतेषां प्रातिपदिकानामर्थ: परस्परं भेदश्च प्रयोगेणैव बोधयितव्य:।)



बालकः खेलति।
सः हसति च।



बालिका नृत्यति।
सा गीतम् अपि गायति।



फलं पक्वम् अस्ति।
तत् मधुरम् अस्ति।



धार्मिकः वृक्षं रोपयति।
सः तं सिञ्चति च।



शिक्षकः चपले बालिके विह्वयते
सः ते उपदिशति च।



रामः आम्रं प्रक्षालयति।
सः तत् खादति च।



रामः बालकैः सह विद्यालयं गच्छति।
सः तैः सह संलपति च।



माया सखीभिः सह भ्रमति।
सा ताभिः सह खेलति च।



रामस्य दश रूप्यकाणि सन्ति।
सः तैः रूप्यकैः पुस्तिकाः क्रीणीते।



पिता बालकाय रूप्यकाणि ददाति।
माता तस्मै खाद्यकं ददाति।



पिता बालिकायै झोलिकां ददाति।
माता तस्यै पुस्तकानि ददाति।



आम्रवृक्षात् पत्राणि पतन्ति।
तस्मात् फलानि अपि पतन्ति।



गौ: महिष्या: न बिभेति।
मनुष्य: अपि तस्या: न बिभेति।



बालकस्य पुस्तकम् अस्ति।
तस्य कलमम् अपि अस्ति।



बालिकाया: काचवलया: सन्ति।
तस्या: अङ्गुलीयकमपि अस्ति।



पिता पुत्र्यां स्नेहं कुरुते।
माता अपि तस्यां स्नेहं कुरुते।



सखाय: बालके स्नेहं कुर्वते।
शिक्षका: अपि तस्मिन् स्नेहं कुर्वते।



अम्बा कूपात् जलम् आनयति।
भगिनी अपि तत: जलम् आनयति।



युवका: नद्यां स्नान्ति।
बालका: अपि तत्र स्नान्ति।



बालका: विद्यालये पठन्ति।
बालिका: अपि तत्र पठन्ति।



व्याघ्र: वने निवसति।
मृगा: अपि तत्र निवसन्ति।



कुक्कुर: ग्राम्य: पशु: अस्ति। स: ग्रामे निवसति। स: मनुष्याणाम् उपकारं करोति। तस्य एकं वक्रं पुच्छं भवति। तस्य दंष्ट्रा: तीक्ष्णा: भवन्ति। स: चौरेषु आगतेषु बुक्कति। चौरा: तस्मात् बिभ्यति। मनुष्या: गृहस्य सुरक्षायै तं पालयन्ति। ते तस्मै खाद्यं च ददति।

अधोनिर्दिष्टानि रिक्तस्थानानि समुचितै: पदै: पूरयत–

१. (क) बालक: भक्तं खादति।
(ख) स: फलानि अपि खादति।

२. (क) बालिका विद्यालयं गच्छति।
(ख) ..... तत्र पठति।

३. (क) अहं विटपं रोपयामि।
(ख) अहं ..... सिञ्चामि।

४. (क) दयालव: मार्गणाय धनं ददति।
(ख) ते..... भक्तम् अपि ददति।

५. (क) महिष्या: शृङ्गे भवत:।
(ख) ..... पुच्छम् अपि भवति।

६. (क) सिंह: वने निवसति।
(ख) व्याघ्र: अपि ..... निवसति।





बालक: पुस्तकं गृह्णाति ।

बालक: विद्यालयं गच्छति ।

बालक: पुस्तकं गृहीत्वा विद्यालयं गच्छति ।





बालिके भक्तं खादत: ।

बालिके विद्यालयं गच्छत: ।

बालिके भक्तं खादित्वा विद्यालयं गच्छत: ।





बालका: रामेण सह मिलन्ति ।

बालका: रामेण सह खेलन्ति ।

बालका: रामेण सह मिलित्वा खेलन्ति ।





माया धारां गमिष्यति ।

माया जलम् आनेष्यति ।

माया धारां गत्वा जलम् आनेष्यति ।



पथिक: फलानि क्रीणीते।



पथिक: फलानि खादति।

पथिक: फलानि क्रीत्वा खादति।



हरि: अस्नासीत्।



हरि: मन्दिरम् अगमत्।

हरि: स्नात्वा मन्दिरम् अगमत्।



माता लुग्नानि धावति।



माता लुग्नानि शुष्कयति।

माता लुग्नानि धावित्वा शुष्कयति।

अधोलिखितेषु वाक्येषु द्वेद्वे वाक्ये योजयित्वा एकैकं वाक्यं रचयत–

(क) राम: विपणीं गच्छति । राम: पुस्तकानि क्रीणीते ।
(ख) ब्राह्मणा: स्नान्ति । ब्राह्मणा: सन्ध्योपासनं कुर्वते ।
(ग) माता कूपं गच्छति । माता जलम् आनयति ।
(घ) रमा सखीभि: सह मिलति । रमा उद्यानं गच्छति ।
(ङ) बालका: फलानि क्रीणन्ति । बालका: फलानि आनयन्ति ।
(च) कृषाण: कुद्दालं क्रीणीते । कृषाण: तेन वार्टीं खनति ।
(छ) युवां विद्यालये अपठिष्टम् । युवां गृहम् आगमतम् ।
(ज) आवां भक्तं खादिष्याव: । आवां विद्यालयं गमिष्याव: ।
(झ) वयं क्रीडनकानि क्रेष्याम: । वयं क्रीडनकानि आनेष्याम: ।



माया सेवं प्रक्षालयति।



माया सेवं खादति।

माया सेवं प्रक्षाल्य खादति।



बालकौ चक्रकट्याम् उपविशतः।



बालकौ भक्तं खादतः।

बालकौ चक्रकट्याम् उपविश्य भक्तं खादतः।



छात्राः गुरुं प्रणमन्ति।



छात्राः पाठं पठन्ति।

छात्राः गुरुं प्रणम्य पाठं पठन्ति।



गोपालः वृक्षम् आरोहति।



गोपालः फलानि भूम्यां पातयति।

गोपालः वृक्षम् आरुह्य फलानि भूम्यां पातयति।




अग्रजः नगरात् आगमिष्यति। अग्रजः नगरस्य वृत्तान्तं कथयिष्यति।

अग्रजः नगरात् आगम्य नगरस्य वृत्तान्तं कथयिष्यति।




पिता गृहम् आगमत्। पिता जलम् अपात्।

पिता गृहमागम्य जलमपात्।




व्याधः जालं प्रसारयति। व्याधः पारावतान् समादत्ते।

व्याधः जालं प्रसार्य पारावतान् समादत्ते।

अधोलिखितेषु वाक्येषु द्वे‌द्वे वाक्ये योजयित्वा एकैकं वाक्यं रचयत–

(क) पिता नगरात् आगमिष्यति। पिता अस्मभ्यं मिष्टखादिकां दास्यति।
(ख) बालिकाः मञ्चे उपविशन्ति। बालिकाः पाठं पठन्ति।
(ग) कृषकः वृक्षम् आरोहति। कृषकः घासं पातयति।
(घ) सैनिकः अश्वम् आरोहति। सैनिकः देशान्तरं गच्छति।
(ङ) त्वं शिक्षिकां प्रणमसि। त्वं पाठं पठसि।
(च) अहम् अमृतफलं प्रक्षालयामि। अहम् अमृतफलं खादामि।
(छ) वाणिजाः महार्घं विक्रीणते। वाणिजाः धनिकाः भवन्ति।





बालकः विद्यालयं गच्छति।    बालकः विद्यालये पठति।

बालकः पठितुं विद्यालयं गच्छति।





बालिके गृहम् आगच्छतः।    बालिके खाद्यकं खादतः।

बालिके खाद्यकं खादितुं गृहम् आगच्छतः।





मुनयः नदीं गच्छन्ति।    मुनयः स्नान्ति।

मुनयः स्नातुं नदीं गच्छन्ति।





पशवः पल्वलं गच्छन्ति।    पशवः पल्वले पानीयं पिबन्ति।

पशवः पानीयं पातुं पल्वलं गच्छन्ति।



भगिनी विपणीं गच्छति।



भगिनी फलानि क्रीणाति।

भगिनी फलानि क्रेतुं विपणीं गच्छति।



महिला नदीं गच्छति।



महिला जलम् आनयति।

महिला जलमानेतुं नदीं गच्छति।



बालकाः तिर्यक्सङ्ग्रहालयं गच्छन्ति।



बालकाः सिंहं प्रेक्षन्ते।

बालकाः सिंहं प्रेक्षितुं तिर्यक्सङ्ग्रहालयं गच्छन्ति।

अधोलिखितेषु वाक्येषु द्वेद्वे वाक्ये योजयित्वा एकैकं वाक्यं रचयत–

(क) वानराः उपवनम् आगच्छन्ति। वानराः फलानि खादन्ति।
(ख) बालिकाः विद्यालयं गच्छन्ति। बालिकाः विद्यालये पठन्ति।
(ग) पान्थः कूपम् अगमत्। पान्थः पानीयम् अपात्।
(घ) अग्रजः विपणीं गमिष्यति। अग्रजः पुस्तकानि क्रेष्यति।
(ङ) यूयं तिर्यक्सङ्ग्रहालयं गच्छथ। यूयं व्याघ्रं प्रेक्षध्वे।
(च) ऋषयः नदीं गच्छन्ति। ऋषयः स्नान्ति।
(छ) माता कूपं गच्छति। माता जलम् आनयति।



एकादश बालकाः
पठन्ति।



एकादश बालिकाः
लिखन्ति।



एकादश फलानि
पतन्ति।



द्वादश बालकाः
खेलन्ति।



द्वादश कुक्कुट्यः
चरन्ति।



द्वादश पत्राणि
पतन्ति।



त्रयोदश घोटकाः
धावन्ति।



त्रयोदश पिपीलिकाः
हिण्डन्ते।



त्रयोदश भाण्डानि
महानसे सन्ति।



चतुर्दश कुक्कुराः
बुक्कन्ति।



चतुर्दश मधुकर्यः
उड्डयन्ते।



चतुर्दश तालकानि
सन्ति।



पञ्चदश कुक्कुटाः
वाश्यन्ते।



एकस्मिन् पक्षे
पञ्चदश तिथयः भवन्ति।



पञ्चदश कलमानि
एकस्यां पुटिकायां सन्ति।



षोडश सैनिकाः
गच्छन्ति।



षोडश मालाः शोभनाः
सन्ति।



षोडश लड्डूकानि
पिशीलके सन्ति।



सप्तदश बिडालाः
तिष्ठन्ति।



सप्तदश रोटिकाः
स्थाले सन्ति।



सप्तदश आम्राणि
करण्डके सन्ति।



अष्टादश हंसाः
पुष्करिण्यां प्लवन्ते।



अष्टादश पुस्तिकाः
खट्विकायां सन्ति।



अष्टादश कदलीफलानि
एकस्मिन् हस्तके सन्ति।



ऊनविंशतिः चटकाः
आकाशे उड्डयन्ते।



ऊनविंशतिः तालिकाः
एकस्मिन् कुण्डलके सन्ति।



ऊनविंशतिः पुस्तकानि
पुस्तकधान्यां सन्ति।



विंशतिः दीपाः
ज्वलन्ति।



विंशतिः लेखन्यः
एकस्यां पुटिकायां सन्ति।



विंशतिः कन्दुकानि
व्यायामशालायां सन्ति।

विंशः पाठः

(बालकविता)

# प्रातःकालवर्णनम्

प्रातःकाले पाटला दिग् हि पूर्वा
गर्भे बालं सूर्यदेवं च धृत्वा ।
अस्मान् सर्वान् स्वोन्मुखान् कारयन्ती
निद्रां तन्द्रां शोभते वारयन्ती ॥ १ ॥





प्राचीं त्यक्त्वा गच्छति द्यां पतङ्गो
नीडं मुक्त्वा याति भूमिं विहङ्गः ।
पातुं पेयं याति पुष्पं च भृङ्गस्
तिष्ठन् कायं निर्धुनीते तुरङ्गः ॥२ ॥

सर्वे मर्त्या यान्ति कार्याय तूर्णम्
भाति क्षेत्रं कर्मशीलैर् हि पूर्णम् ।
गेहे तिष्ठेत् कोऽपि वृद्धोऽतिजीर्णो
नास्त्युत्साहो मानवानां विशीर्णः ॥ ३ ॥





तापात् सौरादोषबिन्दुर् विलीनः
सूर्याद् भीत्वोलूकपक्षी निलीनः ।
मार्गं प्राप्तो रंहसा चाऽध्वनीनश्
छात्रोऽधीतेऽनुश्रवं गुर्वधीनः ॥ ४ ॥



 

# हिमालयः



हिमस्य आलयः हिमालयः इति कथ्यते। यः पर्वतः सर्वदा हिमेन आच्छादितः भवति सः पर्वतः हिमालयः उच्यते। हिमालयपर्वतः नेपालदेशस्य उदीच्यां दिशायां वर्तते। हिमालयस्य मनोरवसर्पणम् , मत्स्यपुच्छकम् , अन्नपूर्णाख्यम् , गौरीशङ्करीयम् , व्योमकूटम् , काञ्चनजङ्घम् इत्यादीनि शिखराणि सुप्रसिद्धानि सन्ति। हिमालय एव पार्वतीमहादेवयोः क्रीडाभूमिः इति पुराणेषु वर्णितमस्ति।

हिमालयः अतीव मनोहरः पर्वतः अस्ति। सर्वे जनाः अस्य सौन्दर्यं विलोक्य प्रसन्नाः भवन्ति। कवयः मुग्धाः भूत्वा अस्य अलौकिकीं सुन्दरतां वर्णयन्ति। बहवः जनाः हिमालयस्य शोभां प्रेक्षितुं नेपालदेशम् आगच्छन्ति।

हिमालयात् बह्व्यः नद्यः प्रभवन्ति। तासु महाकाली, कर्णाली (घर्घरा), भेरी, इरावती, गण्डकी, कौशिकी, अरुणा, ताम्रोदरा, मेची च विशेषेण प्रख्याताः सन्ति। ताः सर्वाः अपि हिमालयात् आविर्भूय समुद्रं प्रति गच्छन्ति। तासां नदीनां जलेन नेपालदेशस्य प्रभूतः भूभागः सिक्तः भवति। ततः च नेपालदेशस्य धान्योत्पादनं सम्भवति। तासु नदीषु बहुविधाः मत्स्याः मकराः च निवसन्ति। ताभ्यः नदीभ्यः विद्युतः उत्पादनमपि भवति।

हिमालये बहूनि तीर्थानि सन्ति। तेषु तीर्थेषु मध्ये मानससरोवरम् बिन्दुसरोवरम् मुक्तिक्षेत्रम् दुग्धपुष्करिणी नीलकण्ठह्रद: च इति प्रमुखाणि सन्ति। बहव: श्रद्धालव: जना: प्रतिवर्षं तेषु तीर्थेषु स्नातुं गच्छन्ति।

हिमालयक्षेत्रे चमर्य: मेषा: हिमभल्लूका: हिमचित्रका: कस्तूरीमृगा: च भवन्ति। तत्र जना: भारं वाहयितुं गर्दभान् अपि पालयन्ति।

हिमालयस्य महिमा वेदेषु वेदाङ्गेषु स्मृतिषु पुराणेषु च गीत: वर्तते। महाकवि: कालिदास: कुमारसंभवमहाकाव्यस्याऽऽदौ हिमालयस्याऽतीव मनोहरं वर्णनं कृतवान् अस्ति। तस्य प्रथमं पद्यमेतत् वर्तते-

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराज:।
पूर्वापरौ तोयनिधी वगाह्य
स्थित: पृथिव्या इव मानदण्ड:॥ इति।

तललिखितेषु वाक्येषु मध्ये समीचीनानि वाक्यानि अभ्यासपुस्तिकायां सारयत-

१. हिमालय: प्रतीच्यां दिशायां वर्तते।
२. हिमालय: उदीच्यां दिशायां वर्तते।
३. स्वल्पा: जना: हिमालयस्य शोभां प्रेक्षितुम् आगच्छन्ति।
४. बहव: जना: हिमालयस्य शोभां प्रेक्षितुम् आगच्छन्ति।
५. हिमालयात् बह्व्य: नद्य: प्रभवन्ति।
६. हिमालयात् स्वल्पा: नद्य: प्रभवन्ति।
७. हिमालये बहूनि तीर्थानि सन्ति।
८. हिमालये स्वल्पानि तीर्थानि सन्ति।
९. दयालव: जना: तीर्थेषु गच्छन्ति।
१०. श्रद्धालव: जना: तीर्थेषु गच्छन्ति।
११. महाकवि: कालिदास: हिमालयस्य मनोहरं वर्णनं कृतवान् अस्ति।

# हंस-काक-धानुष्कपथिकानां कथा

अस्ति भारतवर्षे चिरकालात् प्रसिद्धा उज्जयिनी नाम नगरी वर्तते। तस्यां नगर्यां बहवः धानुष्काः वीराः निवसन्ति स्म। एकदा कश् चन वीरः कार्यार्थं कुत्र चित् गत्वा उज्जयिनीं प्रत्यावर्तमानः अभूत्। सः च अधिकेन हिण्डनेन परिश्रान्तः मार्गस्य प्रान्ते एकस्य पर्कटिवृक्षस्य मूले छायायां धनुष्काण्डं रक्षित्वा अशयिष्ट। अथ कतिषु चित् क्षणेषु गतेषु सूर्यस्य तलतो लम्बनात् तस्य मुखात् वृक्षस्य छाया अपागमत्। तस्मिन् एव पर्कटिवृक्षे चिरात् कौ चन हंस-काकौ निवसतः स्म। तत्र दयालुः हंसः पथिकस्य मुखं घर्मेण व्याप्तं दृष्ट्वा कस्यां चनाऽधोमुखायां शुष्कायां निष्पत्रायां शाखायाम् उपविश्य पक्षौ प्रसार्य तस्य पथिकस्य मुखे छायामकार्षीत्। ततः सः पथिकः निद्रासुखेन मुखं व्यादात्। अथ परस्य सुखं सोढुम् अशक्नुवन् स्वभावदुर्जनः काकः तस्य मुखे पुरीषोत्सर्गं कृत्वा पलायिष्ट।



मुखे काकपुरीषे पतिते सः वीरो व्यबुद्ध। ततः सः ऊर्ध्वं व्यलुलोकत्, तं हंसम् अद्राक्षीत् च। ततः अयमेव हंसः मम मुखे पुरीषोत्सर्गं चकार इति विचार्य सः वीरः तं हंसम् काण्डस्य प्रहारेण अमीमरत्। अत एव नीतिविद्यावृद्धाः कथयन्ति-

काकसङ्गाद् हतो हंसो धानुष्केणेति जानता।
न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्व चित्॥ इति।

१. कस्यां नगर्यां धानुष्का: वीरा: निवसन्ति स्म ?

२. पथिक: कुत्र अशयिष्ट ?

३. पर्कटिवृक्षे क: निवसति स्म ?

४. हंस: दयालु: अभूत् किं काक: दयालु: अभूत् ?

५. हंस: किं कृत्वा पथिकस्य मुखे छायामकार्षीत् ?

६. काक: किं कृत्वा पलायिष्ट ?

७. धानुष्क: वीर: कम् अमीमरत् ?

८. दुर्जनेन सह स्थातव्यं न वा ?

९. दुर्जनेन सह गन्तव्यं न वा ?

१०. हंस: केन कारणेन हत: अभूत् ?

११. अधोलिखितानि वाक्यानि शुद्धानि कृत्वा सारयत-

(क) उज्जयिनी नगर्यां बहवा: धानुष्का: वीरा: निवसन्ति स्म ।

(ख) वीर: वृक्षस्य छाये धनुष्काण्डं रक्षत्वा अशयिष्ट ।

(ग) पर्कटिवृक्षे हंसकाका: निवसत: स्म ।

(घ) हंस: दयालव: अभूत् ।

(ङ) हंस: पक्षौ प्रसारयित्वा पथिकस्य मुखे छायाम् अकार्षीत् ।

(च) दुर्जनेन सह क्व चित् अपि न स्थितव्यम् न गमितव्यम् ।

१२. रिक्तस्थानं पूरयत-

(क) एकदा कश् चन वीर: कार्यार्थं कुत्र चित् गत्वा उज्जयिनीं ......... अभूत् ।

(ख) परस्य सुखं सोढुम् .... स्वभावदुर्जन: काक: तस्य मुखे पुरीषोत्सर्गं कृत्वा पलायिष्ट ।

(ग) अयमेव हंस: मम मुखे पुरीषोत्सर्गं ......... इति ......... स वीर: तं हंसं काण्डस्य प्रहारेण अमीमरत् ।

(घ) काकसङ्गाद् हतो ......... धानुष्केणेति जानता ।
न स्थातव्यं न गन्तव्यं ........................... ॥

# छात्रयोः संवादः



रमेशः- शङ्कर, कुत्र गत्वा आगच्छन् असि ?

शङ्करः- विपणिं गत्वा आगच्छन् अस्मि ।

रमेशः- झोलिकायां किंकिम् आनैषीः ?

शङ्करः- केलकानि, आरुकाणि, आम्राणि च आनैषम् । ह्यः त्वं किन्तु विद्यालयं नैव आगच्छः ?

रमेशः- अहं तु ह्यः तिर्यक्सङ्ग्रहालयमगच्छम् ।

शङ्करः- केन सह अगच्छः ?

रमेशः- अग्रजेन भगिन्या च सह अगच्छम् ।

शङ्करः- तत्र त्वं किंकिम् अपश्यः ?

रमेशः- सिंहं व्याघ्रं भल्लूकं मृगं च अपश्यम् । तत्र एकः लम्बपुच्छः वानरः अपि अभवत् । अहं तस्मै वानराय मकायमपि अददाम् ।

शङ्करः- अन्यान् काँस्कान् पशून् अपश्यः ?

रमेशः- गण्डकमपि अपश्यम् । तस्य नक्रे उपरि एकः खड्गकः अपि भवति । तत्र अहम् वन्यान् पशून् एव न, किन्तु बहून् वन्यान् पक्षिणः अपि अपश्यम् । तत्र मयूराः, तित्तिराः, शुकाः, सारिकाः, सारसाः, क्रौञ्चाः च आसन् । मयूरस्य अतीव सुन्दरं पिच्छम् भवति । तत्र एकः मयूरः एकवारम् अस्माकम् अग्रे एव अनृत्यत् च ।

शङ्करः- तत्र त्वं सिंहात् व्याघ्रात् च न अबिभेः ?

रमेशः- नाऽबिभयम्। तत्र सर्वे वन्याः पशवः पक्षिणः च पञ्जरे स्थापयित्वा रक्षिता भवन्ति। तेभ्यः कः अपि मनुष्यः न बिभेति। त्वं कदाऽपि तिर्यक्सङ्ग्रहालयं गतवान् नाऽसि ?

शङ्करः- न, अहं तत्र गतवान् नाऽस्मि।

रमेशः- तर्हि त्वमपि तिर्यक्सङ्ग्रहालयं गच्छ, वन्यान् पशून् पक्षिणः च प्रेक्षस्व।

शङ्करः- भवति, अहमपि कदा चित् तिर्यक्सङ्ग्रहालयं गमिष्यामि, वन्यान् पशून् पक्षिणः च अवश्यमेव प्रेक्षिष्ये। इदानीं गृहं गच्छामि।

रमेशः- भवतु अहमपि गच्छामि। श्वः पुनः मेलितास्वः।

१. शङ्करः कुत्र गत्वा आगच्छन् अभूत् ?
२. शङ्करः विपण्याः किंकिमानैषीत् ?
३. रमेशः ह्यः कुत्र अगच्छत् ?
४. किं शङ्करः अपि रमेशेन सह तिर्यक्सङ्ग्रहालयमगच्छत् ?
५. रमेशः तिर्यक्सङ्ग्रहालये किंकिमपश्यत् ?
६. रमेशः लम्बपुच्छाय वानराय किमददात् ?
७. कुत्र कः अनृत्यत् ?
८. किं रमेशः व्याघ्रात् अबिभेत् ?
९. किं शङ्करः तिर्यक्सङ्ग्रहालयं गतवान् अस्ति ?
१०. शङ्करः तिर्यक्सङ्ग्रहालयं गमिष्यति न वा ?
११. शङ्करः सिंहं प्रेक्षिष्यते न वा ?
१२. रिक्तस्थानानि पूरयत-
   (क) तिर्यक्सङ्ग्रहालये सिंहः, व्याघ्रः, ................. च भवन्ति।
   (ख) तिर्यक्सङ्ग्रहालये मयूराः, ...................... सारसाः अपि भवन्ति।
   (ग) गण्डकस्य एकः ....... भवति।
   (घ) मयूरस्य ............ पिच्छं भवति।
   (ङ) तिर्यक्सङ्ग्रहालये सर्पाः, ग्राहाः, कच्छपाः अपि .........।

चतुर्विंशः पाठः

# नीतिपद्यानि



हीयते हि मतिस् तात हीनैस् सह समागमात् ।
समैश् च समतामेति विशिष्टैश् च विशिष्टताम् ॥ १ ॥

यस्यकस्य प्प्रसूतोऽपि गुणवान् पूज्ज्यते नरः ।
धनुर् वंशविशुद्धोऽपि निर्गुणः किङ् करिष्यति ॥ २ ॥

रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ३ ॥

षड् दोषाः पुरुषेणेह हातव्व्या भूतिमिच्छता ।
निद्रा तन्द्रा भयङ् क्रोध आलस्स्यन् दीर्घसूत्त्रता ॥ ४ ॥

यौवनन् धनसम्पत्तिः प्रभुत्त्वमविवेकिता ।
एकैकमप्प्यनर्थाय किमु यत्त्र चतुष्टयम् ॥ ५ ॥

युक्ताहारविहारस्स्य युक्तचेष्टस्स्य कर्मसु ।
युक्तस्स्वप्नाऽवबोधस्स्य योगो भवति दुःखहा ॥ ६ ॥

अभिवादनशीलस्स्य नित्त्यवँ वृद्धोपसेविनः ।
चत्त्वारि तस्स्य वर्धन्ते आयुर् विद्या यशो बलम् ॥ ७ ॥

✪

## परिशिष्टम्

### १. प्रातिपदिकरूपावलि:

#### १. कवि-प्रातिपदिकस्य पुंलिङ्गस्य रूपाणि-

| | *एकवचने* | *द्विवचने* | *बहुवचने* |
|---|---|---|---|
| प्रथमायाम्- | **कवि:** (कविया)[*] | **कवी** | **कवय:**[+] (कव्य:, कविय:) |
| द्वितीयायाम्- | **कविम्** | **कवी** | **कवीन्** (कव्य:, कविय:) |
| तृतीयायाम्- | **कविना**[+] (कविया, कव्या) | **कविभ्याम्** | **कविभि:** |
| चतुर्थ्याम्- | **कवये** (कव्ये, कविये) | **कविभ्याम्** | **कविभ्य:** |
| पञ्चम्याम्- | **कवे:** (कव्य:, कविय:) | **कविभ्याम्** | **कविभ्य:** |
| षष्ठ्याम्- | **कवे:**[+] (कव्य:, कविय:) | **कव्यो:** (कवियो:) | **कवीनाम्** |
| सप्तम्याम्- | **कवौ** (कवा, कवी, कवयि) | **कव्यो:** (कवियो:) | **कविषु** (कवा) |
| सम्बोधने- | **कवे** (कविया) | **कवी** | **कवय:** (कव्य:, कविय:) । |

#### २. नदी-प्रातिपदिकस्य स्त्रीलिङ्गस्य रूपाणि-

| | | | |
|---|---|---|---|
| प्रथमायाम्- | **नदी** | **नद्यौ** (नद्या, नदी) | **नद्य:** (नदय:, नदी:) |
| द्वितीयायाम्- | **नदीम्** | **नद्यौ** (नद्या, नदी) | **नदी:** (नद्य:) |
| तृतीयायाम्- | **नद्या** (नदिया) | **नदीभ्याम्** | **नदीभि:** |
| चतुर्थ्याम्- | **नद्यै** | **नदीभ्याम्** | **नदीभ्य:** |
| पञ्चम्याम्- | **नद्या:** (नदिया:) | **नदीभ्याम्** | **नदीभ्य:** |
| षष्ठ्याम्- | **नद्या:** (नद्यै) | **नद्यो:** (नदियो:, नदीभ्याम्) | **नदीनाम्**[#] (नदीभ्य:) |
| सप्तम्याम्- | **नद्याम्** (नदियाम् , नदी) | **नद्यो:** (नदियो:) | **नदीषु** |
| सम्बोधने- | **नदि** | **नद्यौ** (नद्या, नदी) | **नद्य:** (नदय:, नदी:) । |

#### ३. पशु-प्रातिपदिकस्य पुंलिङ्गस्य रूपाणि-

| | | | |
|---|---|---|---|
| प्रथमायाम्- | **पशु:** (पशुया) | **पशू** (पशावा) | **पशव:** (पश्व:, पशुव:) |
| द्वितीयायाम्- | **पशुम्** | **पशू** (पशावा) | **पशून्** (पश्व:, पशुव:) |
| तृतीयायाम्- | **पशुना**(पशुया, पशावा, पश्वा) | **पशुभ्याम्** | **पशुभि:** |
| चतुर्थ्याम्- | **पशवे** (पश्वे, पशुवे) | **पशुभ्याम्** | **पशुभ्य:** |
| पञ्चम्याम्- | **पशो:** (पश्व:, पशुव:) | **पशुभ्याम्** | **पशुभ्य:** |
| षष्ठ्याम्- | **पशो:**[^] (पश्व:, पशुव:) | **पश्वो:** (पशुवो:) | **पशूनाम्** |
| सप्तम्याम्- | **पशौ** (पशा, पशवि, पश्वि) | **पश्वो:** (पशुवो:) | **पशुषु** |
| सम्बोधने- | **पशो** (पशुया) | **पशू** (पशावा) | **पशव:** (पश्व:, पशुव:) । |

---

[*] () एतादृशाकोष्ठान्तर्गतानि सूक्ष्मलिपौ मुद्रितानि रूपाणि वेदे एव प्रयुक्तानि सन्ति, एतेषां स्वेच्छया अभ्यासस् त्यागो वा कार्य: ।
() एतादृशाकोष्ठान्तर्गतानि स्थूललिपावेव मुद्रितानि रूपाणि विशेषस्थले (अन्वादेशे) एव प्रयुज्यमानानि सन्ति, एतेषामभ्यास: कर्तुमुचित: ।

[+] ख्याता नराधिपतय: कविसंश्रयेण राजाश्रयेण च गता: *कवय:* प्रसिद्धिम् ।
राज्ञा समोऽस्ति न *कवे:* परमोपकारी राज्ञो न चाऽस्ति *कविना* सदृश: सहाय: ॥ सुभाषितरत्नभाण्डागारे ।

[#] *नदीनां* शस्त्रपाणीनां नखिनां शृङ्गिणां तथा । विश्वासो नैव कर्तव्य: स्त्रीषु राजकुलेषु च ॥ हितोपदेशे १।१९

[^] अहितहितविचारशून्यबुद्धे: श्रुतसमयैर् बहुभिस् तिरस्कृतस्य ।
उदरभरणमात्रकेवलेच्छो: पुरुषपशोश् च *पशोश्* च को विशेष: ॥ हितोपदेशे २।४५

### ४ सर्व-प्रातिपदिकस्य रूपाणि-

**पुंलिङ्गे-**

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम्- | **सर्वः** | **सर्वौ** (सर्वा) | **सर्वे*** |
| द्वितीयायाम्- | **सर्वम्** | **सर्वौ** (सर्वा) | **सर्वान्** |
| तृतीयायाम्- | **सर्वेण** | **सर्वाभ्याम्** | **सर्वैः** (सर्वेभिः) |
| चतुर्थ्याम्- | **सर्वस्मै** | **सर्वाभ्याम्** | **सर्वेभ्यः** |
| पञ्चम्याम्- | **सर्वस्मात्** | **सर्वाभ्याम्** | **सर्वेभ्यः** |
| षष्ठ्याम्- | **सर्वस्य** | **सर्वयोः** | **सर्वेषाम्** |
| सप्तम्याम्- | **सर्वस्मिन्** | **सर्वयोः** | **सर्वेषु** |
| सम्बोधने- | **सर्व** | **सर्वौ** (सर्वा) | **सर्वे** |

**स्त्रीलिङ्गे-**

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम्- | **सर्वा** | **सर्वे** | **सर्वाः** |
| द्वितीयायाम्- | **सर्वाम्** | **सर्वे** | **सर्वाः** |
| तृतीयायाम्- | **सर्वया** | **सर्वाभ्याम्** | **सर्वाभिः** |
| चतुर्थ्याम्- | **सर्वस्यै** | **सर्वाभ्याम्** | **सर्वाभ्यः** |
| पञ्चम्याम्- | **सर्वस्याः** | **सर्वाभ्याम्** | **सर्वाभ्यः** |
| षष्ठ्याम्- | **सर्वस्याः** (सर्वस्यै) | **सर्वयोः** (सर्वाभ्याम्) | **सर्वासाम्+** (सर्वाभ्यः) |
| सप्तम्याम्- | **सर्वस्याम्** | **सर्वयोः** | **सर्वासु** |
| सम्बोधने- | **सर्वे** | **सर्वे** | **सर्वाः** |

**नपुंसकलिङ्गे-**

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम्- | **सर्वम्** | **सर्वे** | **सर्वाणि** (सर्वा) |
| द्वितीयायाम्- | **सर्वम्** | **सर्वे** | **सर्वाणि** (सर्वा) |
| तृतीयायाम्- | **सर्वेण** | **सर्वाभ्याम्** | **सर्वैः** (सर्वेभिः) |
| चतुर्थ्याम्- | **सर्वस्मै** | **सर्वाभ्याम्** | **सर्वेभ्यः** |
| पञ्चम्याम्- | **सर्वस्मात्** | **सर्वाभ्याम्** | **सर्वेभ्यः** |
| षष्ठ्याम्- | **सर्वस्य** | **सर्वयोः** | **सर्वेषाम्#** |
| सप्तम्याम्- | **सर्वस्मिन्** | **सर्वयोः** | **सर्वेषु** |
| सम्बोधने- | **सर्व** | **सर्वे** | **सर्वाणि** (सर्वा) । |

---

* *सर्वे* भवन्तु सुखिनः *सर्वे* सन्तु निरामयाः । *सर्वे* भद्राणि पश्यन्तु मा कश् चिद् दुःखभाग् भवेत् ॥

*सर्वासा*मेव वृत्तीनां वृत्ती राजकुलाश्रया । अधर्मबहुला ह्येषा नित्योद्वेगा च भारत ॥ शान्तिपर्वणि ।

# *सर्वेषा*मेव शौचानामर्थशौचं परं स्मृतम् । योऽर्थे शुचिः स हि शुचिर् न मृद्वारिशुचिः शुचिः ॥ मनुस्मृतौ ५।१०६

५. तत्-प्रातिपदिकस्य रूपाणि-

पुंलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम्- | सः* | तौ (ता) | ते |
| द्वितीयायाम्- | तम् | तौ (ता) | तान् |
| तृतीयायाम्- | तेन | ताभ्याम् | तैः (तेभिः) |
| चतुर्थ्याम्- | तस्मै | ताभ्याम् | तेभ्यः |
| पञ्चम्याम्- | तस्मात् | ताभ्याम् | तेभ्यः |
| षष्ठ्याम्- | तस्य | तयोः | तेषाम् |
| सप्तम्याम्- | तस्मिन् | तयोः | तेषु |

स्त्रीलिङ्गे-

| | | | |
|---|---|---|---|
| प्रथमायाम्- | सा | ते | ताः' |
| द्वितीयायाम्- | ताम् | ते | ताः |
| तृतीयायाम्- | तया | ताभ्याम् | ताभिः |
| चतुर्थ्याम्- | तस्यै+ | ताभ्याम् | ताभ्यः |
| पञ्चम्याम्- | तस्याः | ताभ्याम् | ताभ्यः |
| षष्ठ्याम्- | तस्याः# (तस्यै) | तयोः (ताभ्याम्) | तासाम् (ताभ्यः) |
| सप्तम्याम्- | तस्याम् | तयोः | तासु |

नपुंसकलिङ्गे-

| | | | |
|---|---|---|---|
| प्रथमायाम्- | तत् | ते | तानि' (ता) |
| द्वितीयायाम्- | तत् | ते | तानि (ता) |
| तृतीयायाम्- | तेन | ताभ्याम् | तैः (तेभिः) |
| चतुर्थ्याम्- | तस्मै | ताभ्याम् | तेभ्यः |
| पञ्चम्याम्- | तस्मात् | ताभ्याम् | तेभ्यः |
| षष्ठ्याम्- | तस्य | तयोः | तेषाम् |
| सप्तम्याम्- | तस्मिन् | तयोः | तेषु । |

---

* *तानी*न्द्रियाण्यविकलानि *तदेव* नाम *सा* बुद्धिरप्रतिहता वचनं *तदेव* ।
अर्थोष्मणा विरहितः पुरुषः *स* एव अन्यः क्षणेन भवतीति विचित्रमेतत् ॥ हितोपदेशे १।१२९

' *ता* इङ्गुदीस्नेहकृतप्रदीपमास्तीर्णमेध्याजिनतल्पमन्तः ।
*तस्यै* सपर्यानुपदं दिनान्ते निवासहेतोरुटजं वितेरुः ॥ रघुवंशे १४।८१

\# *तस्याः* खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया ।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ रघुवंशे २।२

६ एतत्-प्रातिपदिकस्य रूपाणि-

पुंलिङ्गे-

| | *एकवचने* | *द्विवचने* | *बहुवचने* |
|---|---|---|---|
| प्रथमायाम्- | एषः# | एतौ (एता) | एते |
| द्वितीयायाम्- | एतम् (एनम्) | एतौ (एनौ) | एतान् (एनान्) |
| तृतीयायाम्- | एतेन (एनेन) | एताभ्याम् | एतैः (एतेभिः) |
| चतुर्थ्याम्- | एतस्मै | एताभ्याम् | एतेभ्यः |
| पञ्चम्याम्- | एतस्मात् | एताभ्याम् | एतेभ्यः |
| षष्ठ्याम्- | एतस्य | एतयोः (एनयोः) | एतेषाम् |
| सप्तम्याम्- | एतस्मिन् | एतयोः (एनयोः) | एतेषु |

स्त्रीलिङ्गे-

| | | | |
|---|---|---|---|
| प्रथमायाम्- | एषा• | एते | एताः+ |
| द्वितीयायाम्- | एताम् (एनाम्) | एते (एने) | एताः (एनाः) |
| तृतीयायाम्- | एतया (एनया) | एताभ्याम् | एताभिः |
| चतुर्थ्याम्- | एतस्यै | एताभ्याम् | एताभ्यः |
| पञ्चम्याम्- | एतस्याः | एताभ्याम् | एताभ्यः |
| षष्ठ्याम्- | एतस्याः (एतस्यै) | एतयोः(एनयोः) (एताभ्याम्) | एतासाम् (एताभ्यः) |
| सप्तम्याम्- | एतस्याम् | एतयोः (एनयोः) | एतासु |

नपुंसकलिङ्गे-

| | | | |
|---|---|---|---|
| प्रथमायाम्- | एतत् | एते | एतानि° (एता) |
| द्वितीयायाम्- | एतत् (एनत्) | एते (एने) | एतानि (एनानि) (एता) |
| तृतीयायाम्- | एतेन (एनेन) | एताभ्याम् | एतैः (एतेभिः) |
| चतुर्थ्याम्- | एतस्मै | एताभ्याम् | एतेभ्यः |
| पञ्चम्याम्- | एतस्मात् | एताभ्याम् | एतेभ्यः |
| षष्ठ्याम्- | एतस्य | एतयोः (एनयोः) | एतेषाम् |
| सप्तम्याम्- | एतस्मिन् | एतयोः (एनयोः) | एतेषु । |

---

# *एष* द्विजजने धर्मो गार्हस्थो लोकधारणः । द्विजानां च सतां नित्यं सदैवैष प्रवर्तते ॥ अनुशासनपर्वणि १४१।४५

• *एषा* प्रसन्नस्तिमितप्रवाहा सरिद् विदूरान्तरभावतन्वी । मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ॥ रघुवंशे १३।४८

+ *एताश्* चाऽन्याश् च विविधाः शल्यभूता नराधिपः । वृकोदरस्य ता वाचः श्रुत्वा निर्वेदमागमत् ॥ आश्रमवासिपर्वणि ३।११

° तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता । *एतान्यपि* सतां गेहे नोच्छिद्यन्ते कदा चन ॥ हितोपदेशे १।६०

७. इदम्-प्रातिपदिकस्य रूपाणि-

पुंलिङ्गे-

| | *एकवचने* | *द्विवचने* | *बहुवचने* |
|---|---|---|---|
| प्रथमायाम्- | **अयम्**[″] | **इमौ** (इमा) | **इमे** |
| द्वितीयायाम्- | **इमम्** (एनम्) | **इमौ** (एनौ) | **इमान्** (एनान्) |
| तृतीयायाम्- | **अनेन** (एनेन) | **आभ्याम्** | **एभिः** |
| चतुर्थ्याम्- | **अस्मै** | **आभ्याम्** | **एभ्यः** |
| पञ्चम्याम्- | **अस्मात्** | **आभ्याम्** | **एभ्यः** |
| षष्ठ्याम्- | **अस्य** | **अनयोः** (एनयोः) | **एषाम्** |
| सप्तम्याम्- | **अस्मिन्** | **अनयोः** (एनयोः) | **एषु** |

स्त्रीलिङ्गे-

| | | | |
|---|---|---|---|
| प्रथमायाम्- | **इयम्**[*] | **इमे** | **इमाः** |
| द्वितीयायाम्- | **इमाम्** (एनाम्) | **इमे** (एने) | **इमाः** (एनाः) |
| तृतीयायाम्- | **अनया** (एनया) | **आभ्याम्** | **आभिः** |
| चतुर्थ्याम्- | **अस्यै** | **आभ्याम्** | **आभ्यः** |
| पञ्चम्याम्- | **अस्याः** | **आभ्याम्** | **आभ्यः** |
| षष्ठ्याम्- | **अस्याः** (अस्यै) | **अनयोः** (एनयोः) (आभ्याम्) | **आसाम्** (आभ्यः) |
| सप्तम्याम्- | **अस्याम्** | **अनयोः** (एनयोः) | **आसु** |

नपुंसकलिङ्गे-

| | | | |
|---|---|---|---|
| प्रथमायाम्- | **इदम्**[′] | **इमे** | **इमानि** (इमा) |
| द्वितीयायाम्- | **इदम्** (एनत्) | **इमे** (एने) | **इमानि** (इमा **एनानि** एना) |
| तृतीयायाम्- | **अनेन** (एनेन) | **आभ्याम्** | **एभिः** |
| चतुर्थ्याम्- | **अस्मै** | **आभ्याम्** | **एभ्यः** |
| पञ्चम्याम्- | **अस्मात्** | **आभ्याम्** | **एभ्यः** |
| षष्ठ्याम्- | **अस्य** | **अनयोः** (एनयोः) | **एषाम्** |
| सप्तम्याम्- | **अस्मिन्** | **अनयोः** (एनयोः) | **एषु ।** |

---

[″] ***अयं*** निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ हितोपदेशे १।७०

[*] ***इयं*** पल्ली भिल्लैरनुचितसमारम्भरसिकैः समन्तादाकीर्णा विषविषमबाणप्रणयिभिः ।
तरोरस्य स्कन्धे गमय समयं कीर निभृतं न वाणी कल्याणी तदिह मुखमुद्रैव शरणम् ॥ सुभाषितरत्नभाण्डागारे ।

[′] इदमाभाति गगने भिन्दानं सततं तमः ।
अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥ सुभाषितरत्नभाण्डागारे ।

८. अदस्-प्रातिपदिकस्य रूपाणि-

| पुंलिङ्गे- | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम्- | असौ# | अमू | अमी |
| द्वितीयायाम्- | अमुम्* | अमू | अमून् |
| तृतीयायाम्- | अमुना | अमूभ्याम् | अमीभिः |
| चतुर्थ्याम्- | अमुष्मै | अमूभ्याम् | अमीभ्यः |
| पञ्चम्याम्- | अमुष्मात् | अमूभ्याम् | अमीभ्यः |
| षष्ठ्याम्- | अमुष्य | अमुयोः | अमीषाम् |
| सप्तम्याम्- | अमुष्मिन् | अमुयोः | अमीषु |
| सम्बोधने- | असौ | अमू | अमी |

| स्त्रीलिङ्गे- | | | |
|---|---|---|---|
| प्रथमायाम्- | असौ | अमू | अमूः° |
| द्वितीयायाम्- | अमुम् | अमू | अमूः |
| तृतीयायाम्- | अमुया | अमूभ्याम् | अमूभिः |
| चतुर्थ्याम्- | अमुष्यै | अमूभ्याम् | अमूभ्यः |
| पञ्चम्याम्- | अमुष्याः | अमूभ्याम् | अमूभ्यः |
| षष्ठ्याम्- | अमुष्याः (अमुष्यै) | अमुयोः (अमूभ्याम्) | अमूषाम् (अमूभ्यः) |
| सप्तम्याम्- | अमुष्याम् | अमुयोः | अमूषु |
| सम्बोधने- | असौ | अमू | अमूः |

| नपुंसकलिङ्गे- | | | |
|---|---|---|---|
| प्रथमायाम्- | अदः+ | अमू | अमूनि (अमू) |
| द्वितीयायाम्- | अदः | अमू | अमूनि (अमू) |
| तृतीयायाम्- | अमुना | अमूभ्याम् | अमीभिः |
| चतुर्थ्याम्- | अमुष्मै | अमूभ्याम् | अमीभ्यः |
| पञ्चम्याम्- | अमुष्मात् | अमूभ्याम् | अमीभ्यः |
| षष्ठ्याम्- | अमुष्य | अमुयोः | अमीषाम् |
| सप्तम्याम्- | अमुष्मिन् | अमुयोः | अमीषु |
| सम्बोधने- | अदः | अमू | अमूनि (अमू)। |

---

# दुर्जनः परिहर्तव्यो विद्ययाऽलङ्कृतोऽपि सन् । मणिना भूषितः सर्पः *किमसौ* न भयङ्करः ॥ हितोपदेशे १।८९.

* *अमुं* पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिस्सृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥ रघुवंशे २।३६

° *अमूर्* विमानान्तरलम्बिनीनां श्रुत्वा स्वनं काञ्चनकिङ्किणीनाम् ।
प्रत्युद्व्रजन्तीव खमुत्पतन्त्यो गोदावरीसारसपङ्क्तयस् त्वाम् ॥ रघुवंशे १३।३३

\+ *अदः* शरण्यं शरभङ्गनाम्नस् तपोवनं पावनमाहिताग्नेः ।
चिराय सन्तर्प्य समिद्भिरग्निं यो मन्त्रपूतां तनुमप्यहौषीत् ॥ रघुवंशे १३।४५

## २. धातुरूपावलिः

### १. 'भू सत्तायाम्' इत्यस्य धातोः कर्तरि लकारे परस्मैपदे रूपाणि-

| | | *एकवचने* | *द्विवचने* | *बहुवचने* |
|---|---|---|---|---|
| लटि- | प्रथमपुरुषे- | **भवति**[#] | **भवतः** | **भवन्ति** |
| | मध्यमपुरुषे- | **भवसि** | **भवथः** | **भवथ** |
| | उत्तमपुरुषे- | **भवामि** | **भवावः** | **भवामः** (भवामसि) । |
| लुङि- | प्रथमपुरुषे- | **अभूत्** | **अभूताम्**[•] (अभूवाम्) | **अभूवन्** |
| | मध्यमपुरुषे- | **अभूः** (अभुवः) | **अभूतम्** | **अभूत** (अभूतन) |
| | उत्तमपुरुषे- | **अभूवम्** (अभूम्) | **अभूव** | **अभूम** । |
| लङि- | प्रथमपुरुषे- | **अभवत्** | **अभवताम्** | **अभवन्** |
| | मध्यमपुरुषे- | **अभवः** | **अभवतम्** | **अभवत** |
| | उत्तमपुरुषे- | **अभवम्** | **अभवाव** | **अभवाम** । |
| लिटि- | प्रथमपुरुषे- | **बभूव** | **बभूवतुः** | **बभूवुः** |
| | मध्यमपुरुषे- | **बभूविथ** | **बभूवथुः** | **बभूव** |
| | उत्तमपुरुषे- | **बभूव** | **बभूविव** | **बभूविम** । |
| लृटि- | प्रथमपुरुषे- | **भविष्यति**[+] | **भविष्यतः** | **भविष्यन्ति** |
| | मध्यमपुरुषे- | **भविष्यसि** | **भविष्यथः** | **भविष्यथ** |
| | उत्तमपुरुषे- | **भविष्यामि** | **भविष्यावः** | **भविष्यामः** (भविष्यामसि) । |
| लुटि- | प्रथमपुरुषे- | **भविता** | **भवितारौ** | **भवितारः** |
| | मध्यमपुरुषे- | **भवितासि** | **भवितास्थः** | **भवितास्थ** |
| | उत्तमपुरुषे- | **भवितास्मि** | **भवितास्वः** | **भवितास्मः** (भवितास्मसि) । |
| लोटि- | प्रथमपुरुषे- | **भवतु**(भूतु)-**भवतात्** | **भवताम्** (भूताम्) | **भवन्तु** |
| | मध्यमपुरुषे- | **भव**(भवा)-**भवतात्** | **भवतम्** (भूतम्) | **भवत** (भवता, भवतन, भवथन) |
| | उत्तमपुरुषे- | **भवानि** (भवा) | **भवाव** | **भवाम** । |

---

[#] हविरावर्जितं होतस् त्वया विधिवदग्निषु ।
वृष्टिर् *भवति* सस्यानामवग्रहविशोषिणाम् ॥ रघुवंशे १।६२

[•] जनस्य साकेतनिवासिनस् तौ द्वावप्य*भूतामभि*नन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिस्स्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ रघुवंशे ५।३१

[+] अवजानासि मां यस्मादतस् ते न *भविष्यति* ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ रघुवंशे १।७७

२. 'खादृ भक्षणे' इत्यस्य धातोः कर्तरि लकारे परस्मैपदे रूपाणि-

| | | *एकवचने* | *द्विवचने* | *बहुवचने* |
|---|---|---|---|---|
| लटि- | प्रथमपुरुषे- | खादति#* | खादतः | खादन्ति |
| | मध्यमपुरुषे- | खादसि | खादथः | खादथ |
| | उत्तमपुरुषे- | खादामि | खादावः | खादामः (खादामसि) । |
| लुङि- | प्रथमपुरुषे- | अखादीत् | अखादिष्टाम् | अखादिषुः |
| | मध्यमपुरुषे- | अखादीः | अखादिष्टम् | अखादिष्ट |
| | उत्तमपुरुषे- | अखादिषम् (अखादीम्) | अखादिष्व | अखादिष्म । |
| लङि- | प्रथमपुरुषे- | अखादत् | अखादताम् | अखादन् |
| | मध्यमपुरुषे- | अखादः | अखादतम् | अखादत |
| | उत्तमपुरुषे- | अखादम् | अखादाव | अखादाम । |
| लिटि- | प्रथमपुरुषे- | चखाद | चखादतुः | चखादुः |
| | मध्यमपुरुषे- | चखादिथ | चखादथुः | चखाद |
| | उत्तमपुरुषे- | चखाद | चखादिव | चखादिम । |
| लृटि- | प्रथमपुरुषे- | खादिष्यति | खादिष्यतः | खादिष्यन्ति |
| | मध्यमपुरुषे- | खादिष्यसि | खादिष्यथः | खादिष्यथ |
| | उत्तमपुरुषे- | खादिष्यामि | खादिष्यावः | खादिष्यामः (खादिष्यामसि) । |
| लुटि- | प्रथमपुरुषे- | खादिता | खादितारौ | खादितारः |
| | मध्यमपुरुषे- | खादितासि | खादितास्थः | खादितास्थ |
| | उत्तमपुरुषे- | खादितास्मि | खादितास्वः | खादितास्मः (खादितास्मसि) । |
| लोटि- | प्रथमपुरुषे- | खादतु-खादतात् | खादताम् | खादन्तु |
| | मध्यमपुरुषे- | खाद(खादा)-खादतात् | खादतम् | खादत (खादता, खादतन, खादथन) |
| | उत्तमपुरुषे- | खादानि (खादा) | खादाव | खादाम । |

---

# यद्यपि धर्मकीर्ति-विमलसरस्वती-रामचन्द्र-भट्टोजिदीक्षित-वरदराजादिभिः पाणिनीयसूत्रक्रमम् उत्सर्गापवाद-क्रमम् अर्थक्रमं चाऽन्याय्यरूपेण परित्यज्य धातुरूपसिद्धिप्रक्रियाप्रदर्शने लकाराणाम् अन्य एव क्रम आश्रितः, स एव च गतानुगतिकैः पण्डितम्मन्यैरन्यैरनुसृतः, तथापि अस्माभिरर्थक्रमानुसारमुत्सर्गापवादक्रमानुसारं पाणिनीयविधिसूत्रक्रमानुसारं च 'लट् लुङ् लङ् लिट् च लृट् लुट् च ततो विध्यादिलिङ् तथा । आशीर्लिङ् लोट् च लेट् लृङ् च लकाराः पाणिनेर् मताः' इति लकारक्रमोऽनुसृतो बोध्यः ।

* प्राक् पादयोः पतति *खादति* पृष्ठमांसं कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति ॥ हितोपदेशे १।८१

